परमहंसपरिव्राजकः सर्वत्रोपेक्षाबुद्धिः परवैराग्ययुक्तः स युक्तः यथार्थयोगयुक्तः योगारूढ इत्युच्यते ॥ ८ ॥

न केवलं समलोष्ठाश्मकाञ्चनोपि तु सुहृदादिष्वपि समबुद्धिरित्याह—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सहृदिति । सुहृत्प्रत्युपकारमनपेक्ष्य पूर्वस्नेहं सम्बन्धं च विनैवोपकर्ता मित्रं स्नेहमपेक्ष्योपकारकः अरिः परापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्ता उदासीनो विवदमानयोरुभयोरप्युपेक्षकः मध्यस्थो विवदमानयोरुभयोरपि हितैषी द्वेष्यः स्वकृतापकारमपेक्ष्यापकर्ता बन्धुः सम्बन्धेनोपकर्ता एतेषु साधुषु शास्त्रविहितकारिषु पापेषु शास्त्रप्रतिषिद्धकारिष्वपि चकारादन्येषु च सर्वेषु समबुद्धिः किं जातिः किं गोत्रः किं कर्मेत्येवमभिनिवेशशून्यबुद्धिः सर्वत्र रागद्वेषशून्य इत्यर्थः । एवं समबुद्धित्वे सर्वोत्कर्षो वा सर्वपापविमोको वा सिध्यतीत्याह विशिष्यते सर्वत उत्कृष्टो भवतीति । विमुच्यते इति पाठे तु सर्वपापविमुक्तो भवतीत्यर्थः । पाठद्वयेपि सर्वेषां योगारूढानामुत्तम इत्यर्थः ।

अन्ये तु इदं त्रयमित्थं योजयन्ति । तथाहि ननु उद्धरेदात्मनात्मानमित्यात्मनैवात्मन उद्धरणं कर्तव्यमित्युक्ते त्वेकस्यैवात्मनः कर्तृकर्मभावः प्रतीयते स च लोकशास्त्रविरुद्धः न हि स्वस्कन्धं स्वयमारोढुं शक्नोति तद्वत्स्वं स्वयमुद्धर्तुं च न शक्नोत्येवेति चेत्सत्यम् स्वं प्रति स्वस्य कर्तृभावः कर्मभावश्च नोपपद्यते तथापि गुणभेदेन तद्द्वयमेकस्मिन्नप्यात्मन्युपपद्यते तथाहि स्वाज्ञानेन संसारे पतितं स्वयमेव शमदमसंन्यासादिसाधनसम्पत्त्या श्रवणमनननिदिध्यासादिभिः समुत्पन्नकूटस्था-

सङ्गसच्चिदानन्दरूपत्वविज्ञानेन देहेन्द्रियादिसम्बन्धरहितं ज्ञात्वा कर्तृत्वभोक्तृत्वादिबन्धेभ्यो मोचयितुमर्हत्येव यथा अज्ञानेनारण्ये निर्जने ह्रदे वाऽन्यत्र वा पङ्के पतितं स्वं स्वयमेव विवेकी चतुरः पुरुषस्तरुं तरुशाखालतां वान्यद्वालम्बयोपायेन पङ्कात्समुद्धरति तद्वदेतन्न्यायाद्भगवद्वचनाच्च न कोपि विरोधः समाधेः प्रतिकूलां देहेन्द्रियादिप्रवृत्तिं निरुध्य समाधिनिष्ठां कृतवतो यतेः फलमद्वमेवेदं सर्वमिति सर्वत्राप्रतिबद्धात्मापरोक्षमेवेति सूचयन्वक्ष्यमाणलक्षणसम्पन्नो भूत्वा यः समाधिनिष्ठासम्पादितविज्ञानबलेन विपरीतप्रत्ययानामकम्प्यो भवति स योगारूढ इति बोधयति द्वाभ्यां जितात्मन इति । विवेकवैराग्याभ्यां तीव्रमोक्षेच्छया चेश्वरप्रसादाद्गुरोः प्रसादाच्च श्रुत्वा मत्वाऽऽत्मानं सम्यग्विज्ञाय कार्यकरणसङ्घातं वशीकृत्यात्मोद्धरणाय यः समाधिं करोति तस्य जितात्मनः जितो निर्जितः समाधिना सर्ववासनापटलसंक्षये सति विपरीतग्रहो यथा न स्यात्तथा वशीकृतो विपरीतग्रहवैमुख्यं प्रापितं आत्मा मनो यस्य तस्य जितात्मनोऽत एव प्रशान्तस्य निर्विकल्पस्य यतेः परमात्मा निरतिशयानन्दरूपत्वान्निरवधिकमहत्वाच्च परमश्चासावात्मा च परमात्मा परं ब्रह्म समाहितः सम्यगाहितः विपरीतप्रत्ययनिर्मुक्तो भूत्वा बहिरन्तस्सर्वत्र चक्षुषो रूपमिव बुद्धिवृत्तेः स्वयमेव विषयो भवतीत्यर्थः । कर्ताहं भोक्ता सुखीदुःखीत्यादिविपरीतप्रत्ययैः संसारीभूतस्यात्मनः समाधिनिष्ठासञ्जातात्मविज्ञानबलेन तत्तत्प्रत्ययसम्बन्धराहित्यापादनमेवात्मनः समुद्धरणमिति परमात्मा समाहित इति पदेन सूचितं भवति। यदुक्तमुद्धरेदात्मानमिति तदुद्धरणप्रकारमेवं निरूप्यदानीमेवंलक्षणो योगारूढो जीवन्मुक्त इति योगिनो योगारूढत्वं सूचयितुमा-

ह शीतेत्यादिना । तस्य योगनिष्ठासिद्धेरसाधारणकारणमाह विजितेन्द्रिय इति । सदसद्विवेकजन्यतीव्रवैराग्यमोक्षेच्छाभ्यां विशिष्य जितानि विषयग्रहणवैमुख्यं प्रापितानीन्द्रियाणि बाह्याभ्यन्तरकरणानि येन स विजितेन्द्रियो भूत्वा योगी योगनिष्ठायां प्रवृत्तो ब्रह्मविद्यतिः स्वयं ज्ञानविज्ञानतृप्तात्मा सर्वं खल्विदं ब्रह्मायमात्मा ब्रह्म तत्त्वमसि ब्रह्मैवेदं सर्वमित्यादिश्रुतयः वासुदेवः सर्वमित्यादिस्मृतयश्च सर्वस्य जगतो नामरूपप्रत्ययनिरासपूर्वकं नियमेन ब्रह्ममात्रत्वं प्रतिपादयंति निरुक्तश्रुतिस्मृतिवाक्यबलात्सर्वस्य ब्रह्ममात्रत्वावधारणमप्रतिहतं ज्ञानं शास्त्रेण सूर्यग्रहणनिश्चयवत् विज्ञानन्तु श्रुतिस्मृतिभिः सम्यङ्निर्धारितस्य चिदेकबुद्धिवृत्त्या ब्रह्मैवाहमिदं जगच्चेति निर्विशेषात्मना सर्वतः परिपूर्णस्य साक्षादपरोक्षीकरणं चक्षुषा राहुग्रस्तार्कबिम्बदर्शनवदेताभ्यां ज्ञानविज्ञानाभ्यां सर्वस्य ब्रह्ममात्रत्वावगाहकाभ्यामप्रतिबन्धाभ्यां तृप्तः पूर्णः । विकल्पान्तरावकाशरहित आत्मा मनो यस्य स ज्ञानविज्ञानतृप्तात्मा तत एव समलोष्टाश्मकाञ्चनः समानि चिदाकारवृत्त्या समत्वेन ब्रह्ममात्रतया दृष्टानि लोष्ठाश्मकाञ्चनानि येन स समलोष्टाश्मकाञ्चनः सर्वत्र ब्रह्ममात्रदर्शीत्यर्थः । एतेन बाह्यपदार्थविवेकराहित्यं हेयोपादेयत्वबुद्धिशून्यत्वं च सूचितं भवति । ननु योगारूढस्य ब्रह्मविदस्सदा सर्वत्र ब्रह्मदर्शनमुपपन्नं परन्त्वाधिभौतिकाद्युपद्रवे प्राप्ते सति तद्दर्शनतदनुसन्धानाभ्यां ब्रह्मदर्शनस्य व्याघातः स्यादित्याशङ्कायां न विजितेन्द्रियवत्त्वान्निःशेषविनष्टबाह्यवासनत्वाच्च तेषु प्राप्तेष्वपि ब्रह्मविद्ब्रह्मदृष्ट्यैव तिष्ठति न ततश्चलतीति बोधयितुमाह शीतोष्णेति । मानः स्तुतिपूजोपचारादिरपमानस्तु नि-

न्द्रातिरस्काराद्दिस्तयोः प्राप्तयोस्सतोस्तथा शीतोष्णसुखदुःखेषु शीतोष्णेत्याधिभौतिकानामाधिदैविकानामुपलक्षणम् सुखदुःखेत्याध्यात्मिकानामुपलक्षणम् तथा च शीतोष्णव्याघ्रसर्पदावाग्न्यादिषु वृष्टयशन्यादिषु च ज्वरादिषु मृष्टान्नादिषु च प्राप्तेषु सत्स्वपि ब्रह्मवित्समदर्शन एव भवति न त्वारोपितनामरूपक्रियातत्फलानुसन्धानपरो भवति नामरूपादेर्ब्रह्मणि प्रविलापितत्वेन पुनर्वृत्तिविषयत्वायोगात् । ततः स्वयं ब्रह्मदृष्ट्यैव तिष्ठति न ततः किञ्चिच्चलति महत्पदं ज्ञात्वा वृक्षमूले वसेत कुचैलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो व्याघ्रे हस्तिनि सिंहे दंशे मशके नकुले सर्पे यक्षे राक्षसे गन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति वृक्ष इव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत उपलमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत आकाशमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत तसत्येन तिष्ठासेदित्यादिश्रुतेः । एवं विपरीतप्रत्ययहेतुषु प्राप्तेष्वपि ब्रह्मवित्कूटस्थो विपरीतप्रत्ययैरकम्प्यो भवति यदा तदा युक्तो योगारूढ इत्युच्यते पण्डितैरित्यर्थः ॥ ८ ॥

ज्ञानविज्ञानपूर्णत्वं बाह्यपदार्थविवेकरहितत्वं हेयोपादेयबुद्धिशून्यत्वं विपरीतप्रत्ययैरकम्पितत्वं च योगारूढस्य लक्षणमिति प्रतिपाद्येदानीमपि सर्वत्र समदर्शनमेव ब्रह्मविदो योगारूढस्य जीवन्मुक्तस्य लक्षणमिति तदेव पुनर्द्रढयति सुहृदिति । प्रत्युपकारमनपेक्ष्यैवोपकर्ता सुहृत् ददाति प्रतिगृह्णातीत्याद्युक्तलक्षणलक्षितो मित्रं परोक्षापरोक्षयोरपकर्तारिः शत्रुः अप्रियवादित्वाद्द्वेष्टुं योग्यो द्वेष्यः वादिप्रतिवादिनोस्समो मध्यस्थः सर्वत्रोपेक्षावानुदासीनः । बन्धवो बान्धवास्तेषु प्राणात्ययेऽपि ये

स्वधर्मं न त्यजन्ति शास्त्रानुवर्तिनस्ते साधवस्तेष्वपि निषिद्ध-कारिणो दुराचाररताः पापास्तेषु च संन्यासात्पूर्वमुक्तगुणविशि-ष्टेष्वपि सुहृदादिपापिष्ठान्तेषु जनेषु योगारूढस्य ब्रह्मविदो यते-स्तत्तन्नामरूपगुणजातिक्रियाग्रहणेन विनैव समबुद्धिः सर्वत्र ब्रह्मबुद्धिर्विशिष्यते क्वचिदापाततो मृदि घटबुद्धिवत्पदार्थबुद्धौ जातायामप्युत्तरक्षणे तां बाधित्वा घटे मृद्बुद्धिवत्सर्वत्र ब्रह्मबुद्धिरेव विशेषायते ब्रह्मप्रत्यय एवाबाध्यमानः स्थिरो भव-तीत्यर्थः। समबुद्धिर्विमुच्यत इति पाठे तु समबुद्धिरिति प्रथमा-न्तं पदम् समा समाकारतामापन्ना सदा सर्वत्र ब्रह्ममात्रग्राहिणी बुद्धिर्यस्य स समबुद्धिर्विमुच्यते। सुहृदादिषु सर्वत्र सदा ब्रह्मैव यः पश्यति स मुक्तो भवतीत्यर्थः ॥ ९ ॥

यतो योगारूढस्यैवाप्रतिबद्धज्ञानं सर्वत्र ब्रह्मदर्शनं मुक्ति-श्च नान्यस्यातो मुमुक्षुणा श्रवणमननाभ्यां विज्ञातात्मतत्त्वेन यतिनैतावन्मात्रेणैव कृतार्थोऽस्मीत्यस्मितां त्यक्त्वा ज्ञानस्या-प्रतिबद्धत्वाय समाधिरवश्यं कर्त्तव्य इति तत्कर्त्तुः समाध्यङ्गानि सूचयन् समाधिं विदधाति—

**योगी युञ्जीत सततमात्मानं रहसि स्थितः।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥**

योगीति। "संन्यासयोगाद्यतयः शुद्धसत्वा इति'-श्रुतेर्यो-गी संन्यासी, यद्वा ब्रह्मणि चित्तं योक्तुं स्थापयितुं शीलमस्या-स्तीति योगी योगाभ्यासशीलो यतिरेकाकी। एकाकीति विशे-षणान्निदिध्यासोरेकस्तपो द्विरध्यायीति न्यायेन स्वातिरिक्त-जनशून्यत्वं विवक्षितम् सति जनान्तरे वाग्व्यापारप्रसक्त्या ध्याननिष्ठाभङ्गप्रसङ्गात्तत एकाकित्वेन भवितव्यम्। किञ्च निराशीः सर्वाभ्या आशीभ्यो विषयभोगाशाभ्यस्तीव्रमोक्षेच्छा-वैराग्याभ्यां निर्गतो यः स निराशीः।

एकान्तवासो लघुभोजनादि मौनं निराशाकरणावरोधः ।
मुनेरसोस्संयमनं षडेते चित्तप्रसादं जनयन्ति शीघ्रम् ॥

इतिन्यायेन निदिध्यासोर्देहजीवनादावप्याशाराहित्येन भवितव्यमिति सूचितम् । किञ्चापरिग्रहः कोपीनकन्थातिरिक्तः परिग्रहो यस्य नास्ति सोऽपरिग्रहः सति तद्‌तिरिक्ते परिग्रहे यतेरपि चोरादिभयेन रक्षणविक्षेपप्रसक्त्या समाध्यसिद्धेस्ततस्तद्राहित्येन भवितव्यम् । एवं योगस्य बहिरङ्गसिद्धावप्यन्तरङ्गाभावे योगो न सिध्यत्यतस्तेन भवितव्यमित्याशयेनाह यतचित्तात्मेति । यतौ वासनया प्राप्ततत्तद्व्यापृतेः सकाशान्निगृहीतौ चित्तं चात्मा देहेन्द्रियसङ्घातश्च तावुभौ येन स यतचित्तात्मा तत्तद्व्यापारान्निरुद्धदेहेन्द्रियमनोबुद्धिचित्त इत्यर्थः । एवमादिध्यानसाधनसम्पन्नो मुमुक्षुर्निदिध्यासुः स्वयं रहस्येकान्ते गिरिकुहरगुहादौ स्थितः सततं नित्यनिरन्तरं नियमेनात्मानं मनः प्रत्यगभिन्ने परे ब्रह्मण्यज्ञानतत्कार्यसर्वदृश्यनिषेधावधिभूते नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वये स्वात्मनि युञ्जीत सन्दधीत ब्रह्मैवाहमहमेव ब्रह्मेति स्वात्मना ब्रह्मानुसन्धानं कुर्यादित्यर्थः ।

अन्ये तु इदं योगारूढस्य लक्षणं फलं चोक्त्वा तस्य साधनं साङ्गं योगं विधत्ते योगीत्यादिभिः स योगी परमो मत इत्यन्तैस्त्रयोविंशतिश्लोकैस्तत्रोत्तमफलप्राप्तये योगारूढतां सम्पादयेदित्याह योगी ध्यानयोगी रहसि एकान्ते गिरिगुहादौ योगप्रतिबन्धकदुर्जनादिवर्जिते देशे स्थितः सन्नेकाकी शिष्यादिसहायवर्जितः संन्यासी यतौ वशीकृतौ चित्तात्मानौ

अन्तःकरणदेहौ यस्य सः योगप्रतिबन्धकव्यापारशून्य इत्यर्थः । निराशीर्विगततृष्णः विरक्तः अपरिग्रहः संन्यासित्वेपि चोरभयजनकपुस्तकादिपरिग्रहशून्यः एतादृशः सन्सततं सर्वदा आत्मानमन्तःकरणं युञ्जीत वृत्तिनिरोधैकाग्रभूमिभ्यां समाहितं कुर्यादित्यर्थः । वृत्तयश्च पञ्चविधाः प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति । तत्र प्रमाणं प्रत्यक्षानुमानागमाख्यमिति साङ्ख्यादयः । प्रत्यक्षानुमानोपमानागमाख्यमिति गौतमाः । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्याख्यमिति पूर्वोत्तरमीमांसकाः । प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्ध्यसम्भवैतिह्याख्यमिति पौराणिकाः । विपर्ययोऽतस्मिंस्तद्बुद्धिः, शुक्ताविदं रजतमित्येवमादिरूपः । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, राहोः शिरः आत्मनश्चैतन्यम् इत्येवमादिरूपो भ्रमप्रमाविलक्षणः । निद्रास्मृती प्रसिद्धे अन्यासामपि वृत्तीनामेतास्वन्तर्भावो बोध्यः इत्याहुः ॥ १० ॥

किमासीनः शयानस्तिष्ठन्गच्छन्वा युञ्जीतेत्याकाङ्क्षायामासीन इत्यभिप्रेत्यासननियमं दर्शयति द्वाभ्यां शुचावित्यादिना । शुचौ स्वभावतः संस्कारतो वा शुद्धे जनसमुदायरहिते निर्भये गङ्गातटगुहादौ देशे समे स्थाने आत्मनः स्वस्यासनं प्रतिष्ठाप्य चतुष्कोणादिसन्निवेशविशेषरूपेण कृत्वा तत्रासने उपविश्य योगं युञ्ज्यादित्यन्वयः । आस्यतेऽस्मिन्नित्यासनं तत्स्वरूपमाह चैलाजिनकुशोत्तरम् चैलं मृदुवस्त्रम् अजिनं मृदुव्याघ्रादिचर्म ते कुशेभ्य उत्तरे यस्मिन् तत् कुशमयवृस्युपरि मृदुचर्म तदुपरि मृदुवस्त्ररूपमित्यर्थः । आसनस्यास्थैर्ये समाधानायोगाद्योगासिद्धिरित्यभिप्रेत्याह स्थिरं निश्चलम् । पतनभयनिरासार्थमाह नात्युच्छ्रितं नात्युच्चं भूतलपाषाणादिसंश्लेषे

वातक्षोभाग्निसङ्गादिसम्भावितदोषनिरासार्थमाह नातिनीचं नाप्यतिनिम्नम्। परासनस्य परेच्छानियमाभावेन योगविक्षेपकरत्वमतस्तद्वारणार्थमात्मन इत्युक्तम् ॥ ११ ॥

एवमासनं प्रतिष्ठाप्य किं कुर्यादित्याकाङ्क्षायामाह—

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥

तत्रेति । तत्र तस्मिन्नासने उपविश्योपवेशनं कृत्वैव न तु शयानस्तिष्ठन्गच्छन्वा निद्रादिप्रसङ्गात् आसीनसम्भवादिति न्यायाच्च योगं समाधिं ब्रह्माकारमनोवृत्तिप्रवाहरूपं निदिध्यासनाख्यम् ।

ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना ।
सम्प्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥

इत्यत्रोक्तं युञ्ज्यादभ्यसेत् । किमर्थम् ? आत्मविशुद्धये आत्मनोऽन्तःकरणस्य सर्वविक्षेपशून्यत्वेनातिसूक्ष्मतया ब्रह्मसाक्षात्काररूपासम्प्रज्ञातसमाधियोग्यतायै "दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति" श्रुतेः। किं कृत्वाभ्यसेदित्यत्राह एकाग्रं राजसतामसव्युत्थानाख्यभूमित्यागेनैकविषयकधारावाहिकानेकवृत्तियुक्तमुद्रिक्तसत्त्वं मनः कृत्वा दृढभूमिकेन प्रयत्नेन सम्पाद्येत्यर्थः। कथंभूतः सन्निति तत्राह यतचित्तेन्द्रियक्रियः यताः संयता उपरताश्चित्तस्येन्द्रियाणां च क्रियाः पूर्वोक्ता वृत्तयो येन सः सर्वविषयेभ्यः प्रत्याहृत्य मनसो यदेकस्मिन्नेव ध्येये विषये समाधानं यच्च चित्तस्येन्द्रियाणां च बाह्यक्रियाणां निरोधनं तदुभयं कृत्वा योगं कुर्यादित्यर्थः ॥ १२ ॥

आसने उपविश्य शरीरं कथं स्थापयेदिति तत्राह—

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥

सममिति । कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं ऋजु धारयन् स्थापयन्नासीदित्युत्तरेणान्वयः । कायः कायैकदेशः कटिदेशादूर्द्ध्वो ग्रीवाधोभागोऽत्र गृह्यते । शिरोग्रीवयोः पृथग्ग्रहणात् कट्यधोभागद्वयोपवेशनेन समत्वायोगाच्च समत्वेपीतस्ततश्चलनं सम्भाव्याहाचलमकम्पम् । उभयत्राप्युपायमाह स्थिरः स्थिरो भूत्वा कार्यकरणयोर्विषयपारवश्यशून्यत्वं सम्प्राप्येत्यर्थः । अत्राप्युपायं लयविक्षेपनिवृत्तिद्वारकमाह स्वं स्वकीयं नासिकाग्रं सम्प्रेक्ष्य सम्प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दोऽत्र लुप्तो द्रष्टव्यः । नासाग्रदर्शनस्य योगाङ्गत्वेनात्राविवक्षितत्वात् । किं तर्ह्यत्र विवक्षितमिति चेच्चक्षुषो रूपादिविषयप्रवृत्तिराहित्यमित्यवेहि । तथा च लयविक्षेपवारणाय विषयप्रवृत्तिरहितोर्द्ध्वनिमीलितनेत्रो भूत्वेत्यर्थः । दिशश्चानवलोकयन् अन्तरान्तरा दिशां चावलोकनमकुर्वन् तस्यापि विक्षेपकत्वेन योगप्रतिबन्धकत्वादित्यर्थः ॥ १३ ॥

योगं युञ्जानस्य विशेषणान्तराणि दर्शयति प्रशान्तात्मेति—

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

प्रकर्षेण निदाननिवृत्तिरूपेण शान्तः रागादिदोषरहितः आत्माऽन्तःकरणं यस्य सः प्रशान्तात्मा । विगता निवृत्ता भीः सर्वकर्मपरित्यागे युक्तत्वायुक्तत्वशङ्का यस्य शास्त्रीयनि-

श्चयवशात्स विगतभीः निःसन्दिग्धबुद्धिरित्यर्थः । यद्वा व्याघ्रादिप्रयुक्तभयशून्य इत्यर्थः । अनेन विशेषणद्वयेन रम्यशब्दश्रवणादिप्रयुक्तं भयप्रयुक्तं च दिगवलोकनं वारितम् । ब्रह्मचारिव्रतब्रह्मचर्यगुरुशुश्रूषाभिक्षाभोजनत्रिकालस्नानादौ स्थितस्तदनुष्ठाता भवेदित्यर्थः । किञ्च मनः संयम्य मनसा विषयाकारवृत्तीरुपसंहृत्य योगनिष्ठो भवेदित्यर्थः । मनोवृत्त्युपसंहारे ध्यानमपि न सिद्ध्येत्तस्य मनोवृत्तिविशेषरूपत्वादित्याशङ्क्याह मच्चित्त इति । मयि परमेश्वरे प्रत्यगात्मनि सगुणे निर्गुणे वा चित्तं यस्य सोऽयं मच्चित्तः मद्विषयकधारावाहिकचित्तवृत्तिमान् विषयान्तरविषयमनोवृत्त्युपसंहारेणात्मन्येव परमेश्वरे तन्नियमनान्न ध्यानानुपपत्तिरित्यर्थः । पुत्रादौ प्रिये चिन्तनीये सति कथमेवं स्यादत आह मत्पर इति । अहमेव परमानन्दरूपत्वात्परः परमपुरुषार्थः प्रियो यस्य स तथा "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरं यदयमात्मेति" श्रुतेः । एवं विषयाकारवृत्तिनिरोधेन भगवदेकाकारचित्तवृत्तिर्युक्तः सम्प्रज्ञातसमाधिमानासीतोपविशेद्यथाशक्ति न तु स्वेच्छया व्युत्तिष्ठेदित्यर्थः(१) ।

अन्ये तु इदं चतुष्टयमित्थं योजयन्ति । पूर्वं योगस्य बहिरङ्गमन्तरङ्गं च सङ्क्षेपेणोक्त्वेदानीं देशासनशरीरधारणादीनि बहिरङ्गाण्यन्तरङ्गानि च योगस्य विशिष्य बोधयितुमादावासनलक्षणमाह । शुचौ मार्जनप्रोक्षणादिक्रियया स्वभावेन वा शुद्धे विजने देशे प्रदेशे नदीतीरगुहादावा-

(१) मधुसूदनाचार्यमतेनेयं स्वव्याख्या ।

त्मनः स्वस्य ध्यानयोग्यमासनं नात्युच्छ्रितमत्यन्तोन्नत्यर-हितमत्युन्नतत्वे क्वचित्पारवश्येन चलनपतनादिविघ्नप्रस-ङ्गादतो नातितुङ्गं नातिनीचमतिनिम्नं च तथात्वे शै-त्योष्णपाषाणादिघर्षणेन भूशङ्कुहननेन च गात्रोपद्रवप्रसङ्गा-दतस्तदुभयविलक्षणं मध्यमित्यर्थः । अथासनरचनामाह चै-लाजिनकुशोत्तरम् चैलं वस्त्रमजिनं वैयाघ्र्यं कार्ष्णेयं वा कुशा-दर्भा उत्तरं व्युत्क्रमेणोपर्युपरि यस्य तच्चैलाजिनकुशोत्तरमधः कुशैस्ततोऽजिनेन ततो वस्त्रेणाच्छादितमित्यर्थः । यद्यपि वस्त्रं "वस्त्रं दारिद्र्यदुःखाय दारुरोगाय चोपल" इति स्मृत्या निषिद्धम् तथापि तद्गृहस्थविषयं न यतिविषयमिति द्रष्टव्यम् । ध्याता स्वस्यैवमासनमचलं स्थिरं निश्चलं यथा स्यात्तथा प्रतिष्ठाप्य कल्पयित्वेत्यर्थः ॥ ११ ॥

एवमासनमुक्त्वा तत्र कर्तव्यमाह तत्रेति । निदिध्यासु-स्तत्रोक्तलक्षण आसन उपविश्य स्वयं यतचित्तेन्द्रियक्रियः इदमेव योगसिद्धेरुत्तममन्तरङ्गसाधनमित्युक्तमपि पुनरुप-दिशति यतचित्तेन्द्रियक्रिय इति । यता संयता सम्यङ्निरुद्धा चित्तस्योभयेन्द्रियाणां च क्रिया स्वाभाविकी चेष्टा विषयप्र-वृत्तिर्येन स तथा भूत्वा मनो मनोवृत्तिस्तामेकाग्रं लक्ष्यै-वाभिमुखं कृत्वा सम्यक्प्रत्यक्प्रवणं कृत्वेत्यर्थः । एवंलक्षण-सम्पन्नो यतिरात्मविशुद्धये आत्मनो विशुद्धिरविद्यातत्का-र्यदेहेन्द्रियादावन्यत्राहं ममेदमित्याद्यसत्प्रत्ययानान्तत्कारण-वासनानां च निःशेषनिवृत्तिरेवात्मनोऽन्तःकरणस्य विशुद्धिस्त-त्सिद्धये योगं ब्रह्मण्येवात्मभावेन पुरुषं योजयतीति योगः समाधिस्तं युञ्ज्यात् प्रत्यक्प्रत्ययसन्तानं कुर्यादित्यर्थः ॥ १२ ॥

पुनरपि योगाङ्गान्येव सिद्धेरान्तराण्युपदिशन्नेवंलक्षणस्सन्नेव यतिः समाधिं कुर्यादित्याह द्वाभ्याम् सममित्यादिना । कायः कटेरूर्ध्वदेशः कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं समं ऋज्वचलं च यथास्यात्तथा धारयन् कायशिरोग्रीवे समतया ऋजुत्वेन धार्यमाणे पार्श्वयोः पश्चाच्च द्रष्टुं स्प्रष्टुं च न शक्यते तथापि मशकपिपीलिकाद्युपद्रवे चलनं सम्भवति तन्निरासार्थमचलमित्युक्तम् । योगशास्त्रोक्तप्रकारेणासनोपवेशे गुदलिङ्गान्तरे स्थिताधारचक्रान्मूलादिबन्धत्रयसिद्धौ आधिमनोवेगोपशामे सति कायग्रीवाशिरसां समत्वेन स्थाणुवदृजुत्वमचलत्वं च भवतीत्यर्थः । एवं कायशिरोग्रीवमृज्वचलं च धारयन् स्थिरः स्थाणुवन्निश्चलो भूत्वा स्वं स्वकीयं नासिकाग्रमेव चक्षुषा सम्प्रेक्ष्य चक्षुषा नासिकाग्रं सम्प्रेक्ष्येति कथनं चक्षुषा तद्विषयरूपं न गृह्णीयादिति नियमार्थम् न तु नासिकाग्रदर्शनार्थम् । यदि नासिकाग्रदर्शनमेव विवक्षितं स्यात्तदा मनस्तदाकारेण तत्रैव स्थितं स्यात्तेन चित्तस्य ब्रह्मण्यवस्थाने न संभवति ब्रह्मणि चित्तस्थापनं खलु समाधिः यत आत्मसंस्थं मनः कृत्वा इत्युच्यतेऽतश्चक्षुषा नासिकाग्रदर्शनविधिः रूपाग्रहणसूचनार्थमेव चक्षुषोरचाञ्चल्यार्थं च तेन सिद्धं चक्षुषा यथा रूपाग्रहणम् तथा श्रोत्रादिनापि शब्दाद्यग्रहणमत्र विवक्षितमिति बोध्यम् । चक्षुषो रूपाग्रहणविधानादेव निदिध्यासं नियमयति दिशश्चेति । यद्यपि नासिकाग्रदर्शनविधिनैव तदतिरिक्तदर्शनं निषिद्धमेव भवति तथापि क्वचित्पुरस्तात्पश्चात्पार्श्वयोर्विपरीतशब्दोत्पत्तावपि दिशश्च प्रागादीश्चकारादात्मशरीरम् चानवलोकयन्नेव युक्त आसीतेत्युत्तरेणान्वयः ॥ १३ ॥

समं कायशिरोग्रीवत्वं स्थिरत्वं नासिकाग्रद्रष्टृत्वं दि
नवलोकनं च योगिनो योगसिद्धेर्ज्ञानीति सूचयन्नुक्तसाध
सम्पन्नो यतिः समाधिं कुर्यादित्याह प्रशान्तेति। प्रकर्षेण शा
प्रशान्त आत्मा मनो यस्य स तथा रागद्वेषाद्यनुत्पत्तिरेवात
नोन्तष्करणस्य शान्तिस्तस्याः रागद्वेषादिदोषोत्पत्तिहेतू
विषयेषु समीचीनत्वासमीचीनत्वप्रीत्यप्रीतीष्टसाधनत्वानि
साधनत्वबुद्धीनां निवृत्तिरेव एवंलक्षणः प्रशान्त आत्मान्तष्कर
यस्य स प्रशान्तात्मा वितगभीः विशिष्य गता विगता निश्
षविनष्टा भीरन्नादानविसर्गातिरिक्तस्य दन्तधावनमुखप्रक्ष
लनादेः सर्वस्य शास्त्रीयस्य च कर्मणः परित्यागे शिष्टा वि
न्दिष्यन्तीति या भीतिः सा यस्य न विद्यते स विगतभीः स्वा
ध्यायं च सर्वकर्माणि संन्यसेत्यादिवेदान्, इमं लोकममुं
परित्यज्यात्मानमन्विच्छेदिति, त्यज धर्ममधर्मं च, नैव धर्मी
न चाधर्मी न चैव हि शुभाशुभीत्यादिश्रुतिस्मृतिनिश्चयमवष्टभ्य
निर्भीक इत्यर्थः। किञ्च ब्रह्मचारिव्रते स्थितः अत्र ब्रह्मचारिव्र
तपदेन भिक्षामात्रं लक्ष्यते न तु त्रिषवणादिः त्रिषवणाद्यनु
ष्ठानस्य समाधिसम्भाविताविक्रियब्रह्माभिन्नत्वज्ञानविध्वंसक
त्वात् योगं युञ्जीत सततमिति-नित्यनिरन्तरकर्तव्यतया प्रा
प्तसमाध्यनुष्ठानप्रतिकूलत्वाच्चाहारमात्रमत्र गृह्यते आहार
विषये ब्रह्मचारिणो व्रतं भिक्षाशनमेव तस्मिन्ब्रह्मचारिव्रते
केवलमाधुकरभक्षण एव स्थितो भवेन्निदिध्यासुर्यतिर्न तु
प्राक्प्रणीतादौ प्राक्प्रणीतायाचिततात्कालिकोपपन्नेष्वाहा
रस्य परतन्त्रत्वेन द्रव्यगुरुत्वाकालिकत्वन्यूनातिरिक्तत्व
प्रतीक्षादिदोषवत्तया समाधिविघ्नकारित्वप्रसङ्गात्तस्मात्स्वा
धीने ब्रह्मचारिव्रते भिक्षाशन एव स्थितो भवेदित्यर्थः

एकान्ते विजने रम्ये गुहायां पुण्यभूमिके ।
रहिते मशकैर्दंशैर्देवायतनकेपि वा ॥३॥
सिद्धक्षेत्रे महातीर्थे ध्यानसिद्धिः प्रजायते ।
तत्र सिद्धासनं बध्वा ऋजुकायं तु कारयेत् ॥४॥
ऊर्ध्वं मेढ्रादधो नाभेः कन्दो ग्रन्थिरिव स्थितः ।
तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ॥५॥
प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ।
इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ॥६॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुषा कुहूश्चैव शङ्खिनी दशमी तथा ॥७॥
एतन्नाडीमयं चक्रं तिस्रस्तत्र प्रवाहकाः ।
इडा च पिङ्गला चैव सुषुम्णा प्राणवाहकाः ॥८॥
इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ।
सुषुम्णा मध्यदेशे तु प्राणमार्गास्त्रयो मताः ॥९॥
पूरयेद्वामया इयाच रेचयेदन्यया ततः ।
तथैव पूरयेद्भूयः रेचयेत्कुम्भवत्ततः ॥१०॥
एवमभ्यासयोगेन नाडीशुद्धिः प्रजायते ।
चन्द्राङ्गे प्राणमभ्यस्य सूर्याङ्गेऽपानमभ्यसेत् ॥११॥
शीतांशुसूर्ययोर्मध्ये चिन्तयेत्परमेश्वरम् ।
सुषुम्णान्तर्गतं देवं चिद्रूपं भावयेत्सदा ॥१२॥
प्रणवे तारकं ब्रह्म नित्यं ध्यायन्ति योगिनः ।
तद्ध्याने तत्क्षणात्सिद्धिर्जायते नात्र संशयः ।
प्रणवाभ्यासतो योगी मया तुल्यो वरानने ॥१३॥
योगमार्तण्डे—
योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत् ।
मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ॥

विकारं मानसं योगी प्रत्याहारेण मुञ्चति ॥ १२ ॥
धारणार्थं मनोधैर्यं ध्यानं निश्चलमद्भुतम् ।
समाधेर्मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभम् ॥ १३ ॥
प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः ।
प्रत्याहारद्विषट्केन धारणा जायते शुभा ॥ १४ ॥
धारणा द्वादशध्यानं प्रोक्तं ध्यानविशारदैः ।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥१५॥ इत्याहुः ॥१४॥

योगमात्मविशुद्धये इति वचनाद्योगानुष्ठानस्य फलमात्मविशुद्धिरात्मविशुद्धेस्तु फलमप्रतिबद्धज्ञानसिद्धिद्वारा ब्रह्मनिर्वाणमेवेति सूचयितुं योगिनो ब्रह्मविदो जीवत एव मुक्तिफलमाह—

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥**

युञ्जन्नेवमिति । योगी योगनिष्ठापरायणो यतिरेवमेकाकित्वनिराशित्वापरिग्रहत्वसमकायशिरोग्रीवत्वस्थिरत्वनासिकाग्रद्रष्टृत्वदिगनवेक्षितृत्ववीतभयत्वब्रह्मचारिव्रतस्थत्वप्रशान्तत्वादिविशेषणविशिष्टो भूत्वा निरुक्तलक्षण आसनउपविश्यात्मानमन्तःकरणं ब्रह्मणि सदा युञ्जन्ननुसन्धानं कुर्वन्नियतमानसः श्रद्धया तीव्रमुमुक्षया च चिरकालं नित्यनिरन्तरं समनुष्ठितसमाध्यभ्यासबलेन नियतं निश्चलं सर्वबाह्यवासनानिश्शेषसङ्क्षयवशाद्विपरीतप्रत्ययानुत्पत्तौ निर्विकारात्मना स्थितं मानसं मनस्चैवानुद्रष्टव्यमिति श्रवणान्मनुत इदमेवाहमस्मीति स्वात्मना ब्रह्म साक्षात्क्रियतेऽनेनेति मनः मन एव मानसं यस्य स नियतमानसोऽप्रतिबद्धात्मविज्ञानो भूत्वा

मत्पर इति किमर्थमुक्तमित्याङ्क्याह मत्संस्थां मदधीना संस्था संशयविपर्ययशून्यत्वेन स्थिरता यस्यास्तां योगेनाराधिताम्मत्तो लभ्यामित्यर्थः । तथाच वक्ष्यति ।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

इति ।

यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावन्न सद्गुरुं कश्चित्सच्छास्त्रमपि नो लभेत् ॥

इत्यन्यत्रोक्तञ्चेत्याहुः ।

अन्ये तु एवं रहोवस्थानादिपूर्वोक्तनियमेनात्मानं मनो युञ्जन्नभ्यासवैराग्याभ्यां समाहितं कुर्वन् योगी योगाभ्यासपरो अभ्यासातिशयेन नियतं निरुद्धं मानसं मनो येन स नियतमानसः सन् शान्तिं सर्ववृत्त्युपरमरूपां प्रशान्तवाहितां निर्वाणपरमात्मतत्त्वसाक्षात्कारोत्पत्तिद्वारेण सकार्याविद्यानिवृत्तिरूपमुक्तिपर्यवसायिनीं मत्संस्थां मत्स्वरूपपरमानन्दरूपनिष्ठामधिगच्छति न तु सांसारिकाण्यैश्वर्याणि अनात्मविषयसमाधिफलभूतानि प्राप्नोति तेषामपवर्गोपयोगिसमाध्युपसर्गत्वादिति । तथा च तत्तत्समाधिफलान्युक्त्वाह भगवान्पतञ्जलिः—

ते समाधावुपसर्गा व्युत्थाने सिद्धय इति ।

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गादिति च । स्थानिनो देवाः । तथाचोद्दालको देवैरामन्त्रितोपि तत्र सङ्गमादरं स्मयं गर्वं चाकृत्वा देवानवज्ञाय पुनरनिष्टप्रसङ्गनिवारणाय निर्विकल्पकमेव समाधिमकरोदिति वसिष्ठेनोपाख्यायते । मुमुक्षुभिर्हेयश्च समाधिः सूत्रितः तेनैव "वितर्कविचा-

रानन्दास्मितानुगमात्संप्रज्ञात इति। सम्यक्संशयविपर्ययानध्यवसायरहितत्वेन प्रज्ञायते प्रकर्षेण विशेषरूपेण ज्ञायते भाव्यस्य रूपं येन स सम्प्रज्ञातः समाधिर्भावनाविशेषः भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनम्। भाव्यं च त्रिविधम् ग्राह्यग्रहणगृहीतृभेदात्। ग्राह्यमपि द्विविधं स्थूलसूक्ष्मभेदात् तदुक्तम्—क्षीणवृत्तेरभिजातस्येव मणेर्गृहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिरिति। क्षीणा राजसतामसवृत्तयो यस्य तस्य चित्तस्य गृहीतृग्रहणग्राह्येष्वात्मेन्द्रियविषयेषु तत्स्था तत्रैवैकाग्रता तदञ्जनता तन्मयता न्यग्भूते चित्ते भाव्यमानस्यैवोत्कर्ष इति यावत्। तथाविधसमापत्तिस्तद्रूपपरिणामो भवति यथाऽभिजातस्य निर्मलस्य स्फटिकमणेस्तत्तदुपाश्रयवशात्तत्तद्रूपापत्तिरेवं निर्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तत्तद्रूपापत्तिः समापत्तिः समाधिरिति च पर्यायः। यद्यपि गृहीतृग्रहणग्राह्येष्वित्युक्तम् तथापि भूमिकाक्रमवशाद्ग्राह्यग्रहणगृहीतृष्विति बोद्धव्यम्। यतः प्रथमं ग्राह्यनिष्ठ एव समाधिर्भवति ततो ग्रहणनिष्ठस्ततो गृहीतृनिष्ठ इति। गृहीत्रादिक्रमोऽप्यग्रे व्याख्यास्यते। तत्र यदा स्थूलं महाभूतेन्द्रियात्मकषोडशविकाररूपं विषयमादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखेन च भावना क्रियते तदा सवितर्कः समापत्तिः। अस्मिन्नेवालम्बने पूर्वापरानुसन्धानशब्दार्थोल्लेखशून्यत्वेन यदा भावना क्रियते तदा निर्वितर्कः समाधिः। एतावुभावप्यत्र वितर्कशब्देनोक्तौ। तत्र तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य तस्य देशकालधर्मावच्छेदेन यदा भावना क्रियते तदा सविचारः। अस्मिन्नेवालम्बने देशकाल-

धर्मावच्छेदं विना धर्मिमात्रावभासित्वेन यदा भावना क्रियते तदा निर्विचारः। एतावुभावप्यत्र विचारशब्देनोक्तौ। तदुक्तम् भाष्ये। वितर्कश्चित्तस्य स्थूल आलम्बने आभोगः सूक्ष्मे विचार इति। इयं ग्राह्यसमापत्तिरिति व्यपदिश्यते। यदा रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा गुणभावाच्चिच्छक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात्सानन्दः समाधिर्भवति। अस्मिन्नेव समाधौ ये बद्धधृतयस्तत्त्वान्तरं प्रधानपुरुषरूपं न पश्यन्ति ते विगतदेहाहङ्कारत्वाद्विदेहशब्देनोच्यन्ते। इयं ग्रहणसमापत्तिः। ततःपरं रजस्तमोलेशानभिभूतं शुद्धं सत्त्वमालम्बनीकृत्य या भावना प्रवर्तते तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावाच्चितिशक्तेरुद्रेकात्सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते। न चाहङ्कारास्मितयोरभेदः शङ्कनीयः यतो यत्रान्तःकरणमहमित्युल्लेखेन विषयान्वेदयते सोऽहङ्कारः। यत्र त्वन्तर्मुखतया प्रतिलोमपरिणामेन प्रकृतिलीने चेतसि सत्तामात्रमवभाति सास्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषाः ते परं पुरुषमपश्यन्तश्चेतसः प्रकृतौ लीनत्वात्प्रकृतिलया इत्युच्यन्ते। सेयं गृहीतृसमापत्तिरस्मितामात्ररूपग्रहीतृनिष्ठत्वात्। ये तु परपुरुषं विविच्य भावनायां प्रवर्तन्ते तेषामपि केवलपुरुषविषया विवेकख्यातिर्गृहीतृसमापत्तिरपि न सास्मितः समाधिर्विवेकेनास्मितायास्त्यागात्। तत्र ग्रहीतृभानपूर्वकमेव ग्रहणभानम् तत्पूर्वकं स्थूलग्राह्यभानमिति। स्थूलविषयो द्विविधोपि वितर्कश्चतुष्टयानुगतः, द्वितीयो वितर्कविकलस्तृतीयानुगतः, तृतीयो वितर्कविचाराभ्यां विकलो द्वितयानुगतः, चतुर्थो वितर्कविचारानन्दैर्विकलोऽस्मितामात्र इति चतुरवस्थोऽयं सम्प्रज्ञात इति। एवं

सवितर्कः सविचारः सानन्दः सास्मितश्च समाधिरणि-मादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वाद्धेय एव । मुमुक्षुभिः ग्रहीतृग्रहणयोरपि चित्तवृत्तिविषयत्वाद्ग्राह्यतायां ग्राह्यकोटौ निक्षेपाद्धेयोपादेयविभागकथनाय ग्राह्यसमापत्तिरेव निरूपिता सूत्रकारेण । 'चतुर्विधा ग्राह्यसमापत्तिः' । स्थूलग्राह्यगोचरा द्विविधा सवितर्का निर्वितर्का च । सूक्ष्मग्राह्यगोचरापि द्विविधा सविचारा निर्विचारा च । तत्र 'शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का' । शब्दार्थज्ञानविकल्पसम्भिन्ना स्थूलार्थावगाहनरूपा सवितर्का समापत्तिः । स्थूलगोचरा सविकल्पकवृत्तिरित्यर्थः । 'स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का' । तस्मिन्नेव स्थूल आलम्बने शब्दार्थस्मृतिप्रविलये प्रत्युदितस्पष्टग्राह्याकारप्रतिभासितया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः । स्थूलगोचरा निर्विकल्पकवृत्तिरित्यर्थः । 'एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता' । सूक्ष्मस्तन्मात्रादिर्विषयो यस्याः सा सूक्ष्मविषया समापत्तिर्द्विविधा सविचारा निर्विचारा च सविकल्पकनिर्विकल्पकभेदेन एतयैव सवितर्कया निर्वितर्कया च स्थूलविषयसमापत्त्या व्याख्याता । शब्दार्थज्ञानविकल्पसहितत्वेन देशकालधर्माद्यवच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा सविचारा । शब्दार्थज्ञानविकल्परहितत्वेन देशकालधर्माद्यनवच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा निर्विचारा । सविचारनिर्विचारयोः सूक्ष्मविषयत्वविशेषणादेव सवितर्कनिर्वितर्कयोः स्थूलविषयत्वमर्थाद्व्याख्यातम् । 'सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्' । सविचाराया निर्विचारायाश्च समापत्तेर्यत्सूक्ष्मविषयत्वमुक्तम् तदलिङ्गपर्यन्तं द्रष्टव्यम् । तेन सानन्दसा-

त्मिकयोरेवं ग्रहीतृग्रहणसमापत्त्योरपि ग्राह्यसमापत्तावेवान्तर्भाव इत्यर्थः। तथाहि पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः आप्यस्यापि रसतन्मात्रम् तैजसस्य रूपतन्मात्रम् वायवीयस्य स्पर्शतन्मात्रं नभसः शब्दतन्मात्रं तेषामहङ्कारस्तस्य लिङ्ग-मात्रमहत्तत्त्वम् तस्याप्यलिङ्गं प्रधानं सूक्ष्मो विषयः। सप्ताना-मपि प्रकृतीनां प्रधान एव सूक्ष्मताविश्रान्तेस्तत्पर्यन्तमेव सू-क्ष्मविषयत्वमुक्तम्। यद्यपि प्रधानादपि पुरुषः सूक्ष्मोऽस्ति तथाप्यन्वयिकारणत्वाभावात्सर्वान्वयिकारणे प्रधान एव निर-तिशयं सौक्ष्म्यं व्याख्यातम्। पुरुषस्तु निमित्तकारणं सदपि नान्वयिकारणत्वेन सूक्ष्मतामर्हति। अन्वयिकारणत्वाविव-क्षायां पुरुषोऽपि सूक्ष्मो भवत्येवेति द्रष्टव्यम्। "ता एव सबी-जःसमाधिः"। ताश्चतस्रः समापत्तयो बाह्येन बीजेन सह वर्तन्त इति सबीजः समाधिः, वितर्कविचाराऽऽनन्दास्मिता-नुगमात्सम्प्रज्ञात इति प्रागुक्तः। स्थूलेऽर्थे सवितर्को निर्वितर्कः सूक्ष्मेऽर्थे सविचारो निर्विचार इति। तत्रान्तिमस्य फलमुपपद्यते। "निर्विचारवैशारद्येऽध्यात्मप्रसादः"। स्थूलविषयत्वे सूक्ष्मेऽपि सवितर्कं शब्दार्थज्ञानविकल्पसङ्कीर्णमपेक्ष्यत इति तस्य निर्वि-तर्कस्य प्राधान्यम्। तत्र पूर्वेषां त्रयाणां निर्विचारार्थत्वान्निर्वि-चारफलेनैव फलवत्त्वम्। निर्विचारस्य तु प्रकृष्टाभ्यासवशाद्वैशा-रद्ये रजस्तमोऽनभिभूतसत्त्वोद्रेके सत्त्वस्याध्यात्मप्रसादः क्लेशवा-सनारहितस्य चित्तस्य भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः प्रादुर्भवति। तथा च भाष्यम्—

प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति॥

"ऋतम्भरा तत्र प्रज्ञा"। तत्र तस्मिन्प्रज्ञाप्रसादे सति

समाहितचित्तस्य योगिनो या प्रज्ञा जायते सा ऋतम्भरा ऋतं सत्यमेव बिभर्तीति न तत्र विपर्यासगन्धोऽप्यस्तीति यौगिकयैवेयं समाख्या । सा चोत्तमो योगः । तथाच भाष्यम् ।

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इति । सा तु श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् । श्रुतमागमविज्ञानम् तत्सामान्यविषयमेव नहि विशेषेण सह कस्यचिच्छब्दस्य सङ्गतिर्ग्रहीतुं शक्यते । तथाऽनुमानं समान्यविषयमेव न हि विशेषेण सह कस्यचित् व्याप्तिर्ग्रहीतुं शक्यते तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्ति । न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लौकिकप्रत्यक्षेण ग्रहणमस्ति किन्तु समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा । तस्मान्निर्विचारवैशारद्यसमुद्भवायां श्रुतानुमानविलक्षणायां सूक्ष्मव्यवहितविप्रकृष्टसर्वविशेषविषयायामृतम्भरायामेव प्रज्ञायां योगिना महान्प्रयत्न आस्थेय इत्यर्थः ॥ ननु क्षिप्तमूढविक्षिप्ताख्यव्युत्थानसंस्काराणामेकाग्रतायामपि सवितर्कनिर्वितर्कसविचारजानां संस्काराणां च सद्भावात्तैश्चाल्यमानस्य चित्तस्य कथं निर्विचारवैशारद्यपूर्वकाध्यात्मप्रसादलभ्या ऋतम्भरा प्रज्ञा प्रतिष्ठिता स्यादत आह "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" । तया ऋतम्भरया प्रज्ञया जनितो यः संस्कारः स तत्त्वविषयप्रज्ञया जनितत्वेन बलवत्त्वादन्यान् व्युत्थानजान्समाधिजांश्च संस्कारांस्तत्त्वविषयप्रज्ञाजनितत्वेन दुर्बलान्प्रतिबध्नाति स्वकार्याक्षमान्करोति नाशयतीति वा तेषां संस्काराणामभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति ततः समाधिरुपतिष्ठते ।

ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्कारातिशयो वर्द्धते ततश्च प्रज्ञा ततश्च संस्कारा इति। ननु भवतु व्युत्थानसंस्काराणामतत्त्वविषयप्रज्ञाजनितानां तत्त्वमात्रविषयसम्प्रज्ञातसमाधिप्रज्ञाप्रभवैः संस्कारैः प्रतिबन्धस्तेषां तु संस्काराणां प्रतिबन्धकाभावादेकाग्रभूमावेव सबीजः समाधिः स्यान्न तु निर्बीजो निरोधभूमाविति तत्राह। "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः"। तस्य सम्प्रज्ञातस्य समाधेरेकाग्रभूमिजन्यस्य, अपिशब्दात्क्षिप्तमूढविक्षिप्तानामपि निरोधे योगिप्रयत्नविशेषेण विलये सति सर्वनिरोधात्समाधेः समाधिजस्य संस्कारस्यापि निरोधान्निर्बीजो निरालम्बनो ऽसम्प्रज्ञातसमाधिर्भवति। स च सोपायः प्राक्सूत्रितः। "विरामप्रत्ययाभ्यासपूर्वकः संस्कारमात्रशेषोऽन्यः"। विरम्यतेऽनेनेति विरामो वितर्कविचारानन्दास्मितादिरूपचिन्तात्यागः तस्य प्रत्ययः कारणं परं वैराग्यमिति यावत्। विरामश्चासौ प्रत्ययश्चित्तवृत्तिविशेष इति वा। तस्याभ्यासः पौनःपुन्येन चेतसि निवेशम् तदेव पूर्वं कारणं यस्य स तथा। संस्कारमात्रशेषः सर्वथानिर्वृत्तिकोऽन्यः पूर्वोक्तात्सबीजाद्विलक्षणो निर्बीजोऽसम्प्रज्ञातसमाधिरित्यर्थः। सम्प्रज्ञातस्य हि समाधेर्द्वावुपायावुक्तौ अभ्यासो वैराग्यं च। तत्र सालम्बनत्वादभ्यासस्य न निरालम्बनसमाधिहेतुत्वं घटत इति निरालम्बने परवैराग्यमेव हेतुत्वेनोच्यते। अभ्यासस्तु सम्प्रज्ञातसमाधिद्वारा प्रणाल्योपयुज्यते। तदुक्तम्—"त्रयमन्तरङ्गं पूर्वेभ्यः"। धारणाध्यानसमाधिरूपं साधनत्रयं यमनियमासनप्राणायामप्रत्याहाररूपसाधनपञ्चकापेक्षया सबीजस्य समाधेरन्तरङ्गसाधनम् साधनकोटौ च समाधि-

समाहितचित्तस्य योगिनो या प्रज्ञा जायते सा ऋतम्भरा ऋतं सत्यमेव बिभर्तीति न तत्र विपर्यासगन्धोऽप्यस्तीति यौगिकयैवेयं समाख्या । सा चोत्तमो योगः । तथा च भाष्यम् ।

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इति । सा तु श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् । श्रुतमागमविज्ञानम् तत्सामान्यविषयमेव नहि विशेषेण सह कस्यचिच्छब्दस्य सङ्गतिर्ग्रहीतुं शक्यते । तथाऽनुमानं सामान्यविषयमेव न हि विशेषेण सह कस्यचित् व्याप्तिर्ग्रहीतुं शक्यते तस्माच्छ्रुतानुमानविषयो न विशेषः कस्यचिदस्ति। न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लौकिकप्रत्यक्षेण ग्रहणमस्ति किन्तु समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा। तस्मान्निर्विचारवैशारद्यसमुद्भवायां श्रुतानुमानविलक्षणायां सूक्ष्मव्यवहितविप्रकृष्टसर्वविशेषविषयायामृतम्भरायामेव प्रज्ञायां योगिना महान्प्रयत्न आस्थेय इत्यर्थः ॥ ननु क्षिप्तमूढविक्षिप्ताख्यव्युत्थानसंस्काराणामेकाग्रतायामपि सवितर्कनिर्वितर्कसविचारजानां संस्काराणां च सद्भावात्तैश्चाल्यमानस्य चित्तस्य कथं निर्विचारवैशारद्यपूर्वकाध्यात्मप्रसादलभ्या ऋतम्भरा प्रज्ञा प्रतिष्ठिता स्यादत आह "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" । तया ऋतम्भरया प्रज्ञया जनितो यः संस्कारः स तत्त्वविषयया प्रज्ञया जनितत्वेन बलवत्त्वादन्यान् व्युत्थानजान्समाधिजांश्च संस्कारांस्तत्त्वविषयप्रज्ञाजनितत्वेन दुर्बलान्प्रतिबध्नाति स्वकार्याक्षमान्करोति नाशयतीति वा तेषां संस्काराणामभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति ततः समाधिरुपतिष्ठते ।

ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्कारातिशयो वर्द्धते ततश्च प्रज्ञा ततश्च संस्कारा इति। ननु भवतु व्युत्थानसंस्काराणामतत्त्वविषयप्रज्ञाजनितानां तत्त्वमात्रविषयसम्प्रज्ञातसमाधिप्रज्ञाप्रभवैः संस्कारैः प्रतिबन्धस्तेषां तु संस्काराणां प्रतिबन्धकाभावादेकाग्रभूमावेव सबीजः समाधिः स्यान्न तु निर्बीजो निरोधभूमाविति तत्राह। "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः"। तस्य सम्प्रज्ञातस्य समाधेरेकाग्रभूमिजन्यस्य, अपिशब्दात् क्षिप्तमूढविक्षिप्तानामपि निरोधे योगिप्रयत्नविशेषेण विलये सति सर्वनिरोधात्समाधेः समाधिजस्य संस्कारस्यापि निरोधान्निर्बीजो निरालम्बनोऽसम्प्रज्ञातसमाधिर्भवति । स च सोपायः प्राक्सूत्रितः । "विरामप्रत्ययाभ्यासपूर्वकः संस्कारमात्रशेषोऽन्यः" । विरम्यतेऽनेनेति विरामो वितर्कविचारानन्दास्मितादिरूपचिन्तात्यागः तस्य प्रत्ययः कारणं परं वैराग्यमिति यावत् । विरामश्चासौ प्रत्ययश्चित्तवृत्तिविशेष इति वा । तस्याभ्यासः पौनःपुन्येन चेतसि निवेशम् तदेव पूर्वं कारणं यस्य स तथा। संस्कारमात्रशेषः सर्वथानिर्वृत्तिकोऽन्यः पूर्वोक्तात्सबीजाद्विलक्षणो निर्बीजोऽसम्प्रज्ञातसमाधिरित्यर्थः। सम्प्रज्ञातस्य हि समाधेर्द्वावुपायावुक्तौ अभ्यासो वैराग्यं च। तत्र सालम्बनत्वादभ्यासस्य न निरालम्बनसमाधिहेतुत्वं घटत इति निरालम्बने परवैराग्यमेव हेतुत्वेनोच्यते । अभ्यासस्तु सम्प्रज्ञातसमाधिद्वारा प्रणाल्योपयुज्यते । तदुक्तम्—"त्रयमन्तरङ्गं पूर्वेभ्यः"। धारणाध्यानसमाधिरूपं साधनत्रयं यमनियमासनप्राणायामप्रत्याहाररूपसाधनपञ्चकापेक्षया सबीजस्य समाधेरन्तरङ्गसाधनम् साधनकोटौ च समाधि-

दर्शितनिष्कामकर्मसाध्यं तल्लिङ्गं च योगभाष्ये दर्शितम् । यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ताऽनुमीयते तथा मोक्षमार्गश्रवणेन सिद्धान्तरुचिवशात् यस्य लोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते । यस्य तु तादृशं कर्मबीजं नास्ति तस्य मोक्षमार्गश्रवणे पूर्वपक्षयुक्तिषु रुचिर्भवत्यरुचिश्च सिद्धान्तयुक्तिषु तस्य कोऽहमासं कथमहमासमित्यादिरात्मभावभावना स्वाभाविकी प्रवर्त्तते । एवं सति किं स्यादिति तदाह "तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्" । निम्नं जलप्रवहणयोग्यो नीचदेशः प्राग्भारस्तद्विपर्यय उच्चप्रदेशः चित्तं च सर्वदा प्रवर्तमानवृत्तिप्रवाहेण प्रवहज्जलतुल्यम् तत्प्रागात्मानात्माविवेकरूपविमार्गवाहि विषयभोगपर्यन्तमस्यासीदधुना त्वात्मानात्मविवेकमार्गवाहि कैवल्यपर्यन्तं सम्पद्यत इति । अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायास्ते सहेतुका निवर्तनीया इत्याह सूत्राभ्याम् । "तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः" । "हानमेषां क्लेशवदुक्तम् ।" तस्मिन्विवेकवाहिनि चित्ते छिद्रेष्वन्तरालेषु प्रत्ययान्तराणि व्युत्थानरूपाण्यहं ममेत्येवंरूपाणि व्युत्थानानुभवजेभ्यः संस्कारेभ्यः क्षीयमाणेभ्योऽपि प्रादुर्भवन्ति । एषां च संस्काराणां क्लेशानामिव हानमुक्तम् यथा क्लेशा अविद्यादयो ज्ञानाग्निना दग्धबीजभावाः न पुनश्चित्तभूमौ प्ररोहं प्राप्नुवन्ति तथा ज्ञानाग्निना दग्धबीजभावाः संस्कारा प्रत्ययान्तराणि न प्रसोतुमर्हन्ति ज्ञानाग्निसंस्कारास्तु यावच्चित्तमनुशेरत इति । एवं च प्रत्ययानुदयेन विवेकवाहिनि चित्ते स्थिरभूते सति "प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः"। प्रसङ्ख्यानं सत्त्वपुरुषान्यताख्यातिः शुद्धात्म-

ज्ञानमिति यावत् । तत्र बुद्धेः सात्त्विके परिणामे कृतसंयमस्य सर्वेषां गुणपरिणामानां स्वामिवदाक्रमणं सर्वाधिष्ठातृत्वं तेषामेव च शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां यथावद्विवेकज्ञानम् सर्वज्ञातृत्वं च विशोका नाम सिद्धिः फलम् तद्वैराग्याच्च कैवल्यमुक्तम् । "सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" "तद्वैराग्यादपि दोषबीजक्षये कैवल्यमिति" सूत्राभ्यां तदेतदुच्यते । तस्मिन्प्रसङ्ख्याने सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारं विवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति ॥

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥

इतिस्मृतेर्धर्मं प्रत्यक्ब्रह्मैक्यसाक्षात्कारं मेहति सिञ्चतीति धर्ममेघस्तत्त्वसाक्षात्कारहेतुरित्यर्थः । " ततः क्लेशकर्मनिवृत्तिः" । ततः धर्ममेघात्समाधेर्धर्माद्वा क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां कर्मणां च कृष्णशुक्लकृष्णशुक्लभेदेन त्रिविधानामविद्यामूलानामविद्याक्षये बीजक्षयादात्यन्तिकी निवृत्तिःकैवल्यं भवति कारणनिवृत्त्या कार्यनिवृत्तेरात्यन्तिकया उचितत्वादित्यर्थः । एवंस्थिते युञ्जन्नेवं सदात्मानमित्यनेन सम्प्रज्ञातः समाधिरैकाग्रभूमावुक्तः । नियतमानस इत्यनेन तत्फलभूतासम्प्रज्ञातसमाधिर्निरोधभूमावुक्तः । शान्तिमितिनिरोधसमाधिजसंस्कारफलभूता प्रशान्तवाहिता, निर्वाणपरमामिति धर्ममेघस्य समाधेस्तत्त्वज्ञानद्वारा कैवल्यहेतुत्वम्, मत्संस्थामित्यौपनिषदाभिमतकैवल्यं दर्शितम् । यस्मादेवं महाफलो योगस्तस्मात्तं महता प्रयत्नेन सम्पादयेदिति भाव इत्याहुः ॥ १५ ॥

एवं योगाभ्यासनिष्ठस्याहारादिनियमं वक्तुं प्रथमं तद्व्य-

तिरेके योगव्यतिरेकमाह ।

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

नेति । हेऽर्जुन अत्यश्नत आत्मसंमितमन्नमतिक्रम्य लोभेनाधिकमश्नतो न योगोऽस्ति अजीर्णदोषेण व्याधिपीडितत्वात् । यद्भुक्तं सज्जीर्यति शरीरस्य च कार्यक्षमतां सम्पादयति तदात्मसंमितमन्नम् । एकान्तं नियमेनानश्नतो न च योगोस्ति अनाहारादल्पाहाराद्वा रसपोषणाभावेन शरीरस्य कार्याक्षमत्वात् । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयादित्यर्थः । यद्वा ।

पूरयेदशनेनार्द्धं तृतीयमुदकेन तु ।
वायोः सञ्चारणार्थं तु चतुर्थमवशेषयेत् ॥

इत्यादियोगशास्त्रोक्तपरिमाणादधिकं न्यूनं वाश्नतो योगो न सम्पद्यत इत्यर्थः । तथाऽतिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति । द्वितीयश्चकार उक्ताहारातिक्रमसमुच्चयार्थः । तृतीयस्तु ।

न श्रान्तः क्षुधितः श्रान्तो न च व्याकुलचेतनः ।
युञ्जीत योगं राजेन्द्र योगसिद्ध्यर्थमात्मनः ॥

इत्यादिमार्कण्डेयोक्तदोषसमुच्चयार्थः । एतादृशस्य योग एव न सिद्ध्यति तेन दुःखरूपसमूलसंसारपङ्कहान्या शुद्धस्वरूपाविर्भावस्तु दूरनिरस्त इति सम्बोधनाशयः ॥ १६ ॥

एवमाहारादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयमाह ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

युक्तेति । आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य तस्य तथा कर्मसु प्रणवजपोपनिषदावर्तनादिषु युक्ता नियतकाला चेष्टा यस्य तस्य तथा युक्तौ नियतकालौ स्वप्नावबोधौ निद्राजागरणे यस्य तस्य योगो भवति समाधिः सिद्ध्यति नान्यस्य । एव-म्प्रयत्नविशेषेण सम्पादितो योगः किम्फल इति तत्राह दुःख-हेति । सर्वदुःखमूलाविद्योच्छेदहेतुब्रह्मविद्योत्पादकत्वात्समू-लसर्वदुःखनिवृत्तिहेतुरित्यर्थः । अत्राहारस्य नियतत्वमुक्तमेव विहारस्य च योजनान्न परं गच्छेदित्यादि, चेष्टायाश्च वागा-दिचापलपरित्यागः, स्वप्नावबोधयोस्तु रात्रेर्विभागत्रयं कृत्वा प्रथमान्त्ययोर्जागरणं मध्ये स्वपनमिति नियतकालत्वं बोध्यम् ।

अन्ये तु इदं द्वयमित्थं योजयन्ति । योगी युञ्जीत सततमित्यारभ्यैतत्पर्यन्तं योगं योगाङ्गानि योगासनं योगि-नो योगस्य फलं च प्रतिपाद्य पुनरपीदानीं योगाभ्यासिन एवाहारादिबहिरङ्गमन्तरङ्गं योगानन्दं च प्रतिपादयति । "य-दात्मसंमितमन्नं तदवति न हिनस्ति यद्भूयो हिनस्ति तद्य-त्कनीयो न तदवतीति" श्रवणात् । तच्छ्रुतेरेवमर्थः । आत्मसंमितं स्वोदरपरिमाणमनुकूलं च यदन्नं भुज्यते तदन्न भोक्तारमवति धर्मनिर्वाहाय च भवति न हिनस्ति धातुवै-षम्यं सम्पाद्य पुरुषं न हन्ति न पीडयति च यद्भूयः स्वोदरपरि-णामादतिरिक्तं यदन्नं भुज्यते तद्धिनस्ति शूलादिकमुत्पाद्य पुरुषं हन्ति धर्मं च नाशयति यत्कनीयोऽत्यल्पमन्नं भुज्यते न तत्पुरुषमवति क्षुन्निवृत्त्यै धर्मनिर्वाहाय च क्षमं न भवति ततः परिमितमेव भोक्तव्यमिति सिद्धम् । इममेवार्थं श्रीभगवानप्याह

नेत्यादिना । अत्यश्नतः स्वोदरपरिमाणमतिक्रम्य जरयितुमशक्यमन्नमश्नतो बहुभुजो योगिनो यतेर्न योगोऽस्ति योगनिष्ठा न सिद्ध्यति । शुश्रूषोरपि यतेः श्रवणं मननं ब्रह्मचर्यं च न सिद्ध्यति । एकान्तं नियमेनानश्नतोऽप्यल्पमश्नतश्च यतेर्योगो नास्त्येव श्रवणमननं चापि न सिद्ध्यति किन्तु स्वोदरपरिमितमभेदोवृद्धिकरं चान्नमश्नत एव योगः श्रवणं मननं ब्रह्मचर्यं च दिवास्वापादिदोषराहित्यमपि सिद्ध्यतीत्यर्थः । अथवा

> पूरयेदशनेनार्द्धं तृतीयमुदकेन तु ।
> वायोः संचारणार्थाय चतुर्थमवशेषयेत् ॥

इत्यादिशास्त्रपरिमाणमतीत्याश्नतोऽनश्नतश्च योगो न सिद्ध्यति यथा तथाऽतिस्वप्नशीलस्याऽत्यन्तनिद्रालोरतिजाग्रतश्च योगो न सिद्ध्यतीत्यर्थः । तर्हि कीदृशस्य योगः सिद्ध्यतीत्यत्राह युक्ताहारविहारस्येति । युक्तः 'पूरयेदशनेनार्धमिति' न गव्यूतेः परं गच्छेन्न ग्रामे नगरे वसेदित्यादिशास्त्रनियमेन युक्त अहोरात्रं विहारो विश्रान्त्यै सञ्चारो यस्य तस्य परिमिताहारविहारस्य युक्तचेष्टस्य कर्मसु अन्नादानविसर्गादिक्रियासु युक्ता यावता कार्यसिद्धिस्तावत्परिमिता चेष्टा देहेन्द्रियव्यापारो यस्य तस्य युक्तस्वप्नावबोधस्य स्वप्नो निद्राऽवबोधो जागरस्तावेतौ युक्तौ,परिमितौ ।

> जाग्रयाद्दशनाड्यस्तु निद्रा तु दशनाडिका ।
> पश्चाज्जागरणं तद्वद्दशनाड्यस्तु योगिनः ॥

इत्युक्तलक्षणलक्षितौ स्वप्नावबोधौ यस्य तस्य योगिनो ब्रह्मनिष्ठस्य आहारविहारनिद्रादीनामतिरेकत्वे रजस्तमोवृद्धिस्तया समाधेर्ज्ञानस्य च विच्छित्तिस्ततस्तत्परिमितया भवितव्यम् । एवंलक्षणस्य यतेर्योगः समाधिर्दुःखहा

दुःखान्याध्यात्मिकादीनि जन्मादीनि च सर्वाणि स्वानुष्ठानसमुत्पन्नाप्रतिबद्धबोधेन हन्तीति दुःखहा भवति विदेहमुक्तिमुत्पादयतीत्यर्थः ॥ १७ ॥

यद्यपि यदा हि नेन्द्रियार्थेष्विति, कूटस्थो विजितेन्द्रिय इति च योगिनो योगारूढत्वं सम्यङ्निरूपितम् तथापि ब्रह्मविलक्षणे परिज्ञाते मुमुक्षुभिस्तदाराधनं तदाश्रयणं च कृत्वा ज्ञानं मुक्तिश्च प्राप्तुं शक्यत इति तदेव च पुनर्विस्पष्टयति ।

> यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
> निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

यदेति । निरुक्तबहिरङ्गान्तरङ्गसाधनसम्पत्त्या तीव्रमोक्षेच्छावैराग्याभ्यां च नित्यं योगमभ्यस्यतो योगिनो यतेर्यदा यस्मिन्काले विनियतं विषयसम्बन्धो यथा न स्यात्तथा निरन्तराभ्यासबलेनैकाग्र्यमधिगमितं चित्तमात्मनि नित्यानन्दैकरसे प्रत्यगभिन्ने ब्रह्मण्येवावतिष्ठते सर्ववासनाक्षत्या सर्वकामविध्वस्त्या च स्वयं सद्वासनावासितं सत्सर्वदा स्वरूप एव तिष्ठति प्रयत्नेनापि न बाह्यमवलम्बत इत्यर्थः । तदेव विस्पष्टयति निस्पृह इति । काम्यन्त इति कामाः शब्दादिविषयास्तेभ्यो यत्नादयत्नाद्वा क्वचिद्विषयीभूतेभ्यः सर्वेभ्यश्च यदाऽयं निस्पृह इच्छाशून्यो भवति तेषु मिथ्यात्वबुद्ध्या इन्द्रियाणि मनश्च न प्रवर्तयति तदा युक्तो योगारूढ इत्युच्यते पण्डितैरिति शेषः ॥ १८ ॥

योगमारुह्य तिष्ठतो यतेश्चित्तं कथं तिष्ठतीत्याकाङ्क्षायां तच्चित्तस्थितेरुपमानमाह ।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

यथेति । तदनुष्ठितयोगस्यासम्प्रज्ञातसमाधित्वं सूचयितुमात्मन इति कर्मणि षष्ठी आत्मन आत्मानं विषयीकृत्य प्रवर्त्तितं योगम् । यद्वा आत्मनः सर्वोपलब्धिसिद्धिसाधनं योगं समाधिं युञ्जतः सादरं नित्यं निरन्तरं समनुतिष्ठतो योगिनो यतेः परमहंसस्य यतचित्तस्य यतं ब्रह्मण्येव ब्रह्माकारेण निश्चलतया सदा स्थापितं चित्तं येन तस्य यतचित्तस्य ब्रह्मण्येव स्थिरीभूतमनसः सैवोपमा उपमीयतेऽनयेत्युपमा स एव दृष्टान्तः निवातस्थोऽन्तर्गृहस्थो दीपो यथा नेङ्गते न चलति तथा ब्रह्मणि स्थापितं ब्रह्मविच्चित्तं न चलति ब्रह्मण्येव ब्रह्मात्मना निश्चलीभूय तिष्ठति । अयमेवासम्प्रज्ञातस्समाधिस्तदुक्तम् ।

मनसो वृत्तिशून्यस्य निर्विकारात्मना स्थितिः ।
असम्प्रज्ञातनामासौ समाधिर्योगिनां प्रियः ॥ इति ।

अन्ये तु इदं द्वयमित्थं योजयन्ति । एतादृशयोगयुक्तः कदा भवतीत्याकाङ्क्षायामाह यदेति । एवमेकाग्रभूमौ सम्प्रज्ञातं समाधिमभिधाय निरोधभूमावसम्प्रज्ञातं समाधिं वक्तुमुपक्रमते यदेतीत्यन्ये । यदा यस्मिन्काले परवैराग्यवशाद्विनियतं विशेषेण सर्ववृत्तिशून्यतया नियतम् एकाग्रतामापन्नं चित्तमन्तःकरणं सर्वतो निरुद्धवृत्तिकत्वादात्मन्येव बाह्यार्थचिन्तां हित्वा केवले शुद्धे प्रत्यगात्मन्यवतिष्ठते निश्चलं भवति । कल्पितस्य हि चित्तस्याधिष्ठानातिरिक्तत्वाभावादन्यतः सर्वतो निवारितमधिष्ठाने निमग्नं स्वप्राधान्यं

हित्वा तदाकारं सदवतिष्ठतीति भावः । तदा तस्मिन्सर्ववृत्तिनिरोधकाले युक्तः समाहित इत्युच्यते । कः? यः सर्वकामेभ्यो निस्पृहः निर्गता दोषदर्शनेन सर्वेभ्यो दृष्टादृष्टलक्षणविषयेभ्यः काम्यमानेभ्यः स्पृहा तृष्णा यस्य स इति परवैराग्यमसम्प्रज्ञातसमाधेरन्तरङ्गसाधनमुक्तम् ॥ १८ ॥

समाधौ चित्तस्थैर्यस्योदाहरणमाह यथेति । यथा दीपो निवातस्थः निवाते वायुरहिते देशे स्थितो नेङ्गते न चलति सोपमा स्मृता उपमीयतेनयेत्युपमा स दृष्टान्तश्चिन्तितो योगज्ञैः कस्य? योगिनः । एकाग्रभूमौ सम्प्रज्ञातसमाधिमतोऽभ्यासपाटवात् यतचित्तस्य निरुद्धसर्वचित्तवृत्तेः योगमसम्प्रज्ञातसमाधिरूपं युञ्जतोऽनुतिष्ठतो य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशतया च निश्चलो दीपो दृष्टान्त इत्यर्थः । यद्वात्मनो योगमात्मविषयं समाधिं युञ्जतोऽनुतिष्ठतो । यद्वात्मनोन्तःकरणस्य योगं समाधिनिरोधमनुतिष्ठतो सम्प्रज्ञातसमाध्यभिमुखस्य योगिनो यथोक्तविशेषणवतो यतं संयतं यच्चित्तमन्तःकरणन्तस्य निश्चलो दीपो दृष्टान्त इत्यर्थः ॥१९॥

द्विविधः समाधिः सम्प्रज्ञातोऽसम्प्रज्ञातश्च । ध्येयैकाकारा सत्त्ववृत्तिर्भेदेन कथंचिज्ज्ञायमाना आद्यः । कथमपि पृथगज्ञायमाना द्वितीयस्तत्राद्यं प्रदर्श्य द्वितीयं दर्शयति ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥२०॥

यत्रेति । एवं योगाभ्यासबलादेकाग्रीभूतं निवातदीपकल्पं सच्चित्तं यत्र यस्मिन्नवस्थाविशेषे उपरमते उपरतिं गच्छति योग-

सेवया योगानुष्ठानेन निरुद्धं सर्वतो निवारितप्रचारं यत्र चैव यस्मिन्नवस्थाविशेषे आत्मना समाध्यभ्यासपरिशुद्धेनान्तःकरणेनात्मानं तत्पदार्थं ज्योतिःस्वरूपम् पश्यन्नपरोक्षीकुर्वन्नात्मन्येव परमानन्दघनपरमात्माभिन्ने स्वरूपे एव तुष्यति परमात्मानं प्रत्यक्चैतन्य एव तद्भावेनापरोक्षीकुर्वन्नतुष्टिहेत्वभावात्तुष्टिं लभत एवेत्यर्थः । तमवस्थाविशेषं चित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयः । अन्येतु एवं सामान्येन समाधिमुक्त्वा निरोधसमाधिं विस्तरेण विवरीतुमारभते । यत्र यस्मिन्परिणामविशेषे योगसेवया योगाभ्यासपाटवेन जाते सति चित्तं निरुद्धमेकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्यत्सर्ववृत्तिनिरोधरूपेण परिणतं भवति यत्र च यस्मिंश्च परिणामे सति आत्मना रजस्तमोनभिभूतशुद्धसत्वमात्रेणान्तःकरणेनात्मानं प्रत्यक्चैतन्यं परमात्माभिन्नं पश्यन् वेदान्तजन्यया वृत्त्या साक्षात्कुर्वन्नात्मन्येव परमानन्दघने तुष्यति न देहादिसङ्घाते न वा तद्भोग्ये शब्दादौ तमन्तःकरणपरिणामसर्ववृत्तिनिरोधरूपं योगं विद्यादित्यन्वय इत्याहुः ।

अपरे तु एवंलक्षणसम्पन्नो यश्चित्तपरिपाकविशेषः स एव योगो ज्ञातव्य इति वक्तुं तल्लक्षणान्याह यत्रेत्यादिभिः । बहिरङ्गान्तरङ्गसाधनसिद्ध्या तीव्रमोक्षेच्छया च विजृम्भितया योगसेवया योगो योगाङ्गं सविकल्पसमाधिर्जातो-

यप्रत्ययोदयराहित्येन केवलचित्प्रत्ययमात्रोदयलक्षणस्तस्य सेवया निरन्तरावृत्त्या निरुद्धं विपरीतवृत्तिर्यथा न स्यात्तथा चिरकालं ब्रह्मप्रत्ययावृत्तावेव स्थापितं चित्तं स्वयं निःशेष-विनष्टसर्वबाह्यवासनापटलं सत् यत्र यस्यां दशायां स्वस्य केवलशुद्धसत्त्वांशमात्रावशेषरूपायां प्राप्तायां सत्यामुपरमतै उपशमं गच्छति वृत्त्यन्तरपरिणाममुज्झित्वा ध्येयात्मनैव निवात-स्थप्रदीपवन्निष्कम्पं तिष्ठतीत्यर्थः । किञ्च यत्र यस्यां चित्तपरि-पाकविशेषदशायामयं ब्रह्मविदुत्तमः आत्मनि निर्मलान्तःक-रणे व्योम्नि राकाचन्द्रबिम्बवत्प्रकाशमानं वृत्त्यारूढं चिदानन्दै-करसमात्मानं परं ब्रह्मात्मना स्वात्मना ब्रह्मैवाहमिति स्वस्व-रूपत्वेन पश्यन् साक्षादपरोक्षीकुर्वन् तुष्यत्यानन्दति मुक्तः कृतार्थोऽस्मीति मोदते "स मोदते मोदनीयं हि लब्ध्वेति श्रुते" योगारोहणं कृतवतो महात्मन आत्मसंसारमोक्षणं तत्सुखं च यतः प्रत्यक्षम् ततः श्रवणादिना विज्ञानात्मतत्त्वस्य यतेर्योगा-रोहणेनैवात्मोद्धरणं सिद्ध्यति तदवश्यं कर्त्तव्यमित्यनेन सूचितं भवतीत्याहुः ॥ २० ॥

किञ्च ।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥

यत्र यस्यां बुद्धेः केवलशुद्धसत्त्वभावापत्तिदशायामयं योगनिष्ठो ब्रह्मविद्यतिः बुद्धिग्राह्यं स्ववृत्त्येकगम्यमत एवातीन्द्रियमिन्द्रि-याविषयमिन्द्रियसम्बन्धाजन्यमित्यर्थः । तत एवात्यन्तिकमन्त-मतिक्रम्य वर्त्तमानमात्यन्तिकमाद्यन्तशून्यमतएव एषोऽस्य परमा-नन्द इत्यादिश्रुतिप्रसिद्धं यत्तत्सुखं वेत्ति सदानन्दोऽहमस्मीत्या-त्मानन्दमनुभवतीत्यर्थः । यत्रायं योगी स्वयं चिदेकवृत्त्या स्वस्व-रूपे सच्चिदानन्दैकरसे ब्रह्मणि तदात्मना स्थितस्सन् तत्त्वत-

परमार्थात् स्वरूपान्न चलति शतधा बाह्याभ्यन्तरविक्षेपेषु प्राप्तेष्वपि न किञ्चिद्विपरीतभावं भजतीत्यर्थः ।

केचित्तु अध्यात्मसुखस्य विषयसुखातिरिक्तत्वमुत्कृष्टत्वं च दर्शयति सुखमिति । अयं योगी यदात्यन्तिकं सर्वोत्कृष्टं सुखं वेत्त्यनुभवति । तद्बुद्धिग्राह्यं बुद्ध्यैवात्माकारया ग्राह्यमनुभवनीयम् न तु विषयेन्द्रियजसुखवदित्याह अतीन्द्रियमिति । विषयेन्द्रियसम्बन्धातीतं यथा सुषुप्तौ तथा चातीन्द्रियपदेन विषयसुखाद्वैलक्षण्यं दर्शितम् आत्यन्तिकपदेनोत्कृष्टत्वं दर्शितमित्यर्थः । अथ पुनरुत्कर्षमेव व्यनक्ति यत्र यस्मिन्सुखे तत्त्वतो निश्चयेन स्थितः स्थिरीभूतः नैव चलति सुखान्तरं नापेक्ष्यते परमानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् । तदुक्तमध्यात्ममीमांसायाम्—

आग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान्विधास्यन्
श्राम्यत्सर्वेन्द्रियौघोऽधिगतमपि सुखं विस्मरन्याति निद्राम् ।
विश्रामायात्मरूपे त्वतितरसुलभे तेन चातीन्द्रियं हि
सौख्यं सर्वोत्तमं स्यात्परिणतिविरसादिन्द्रियोत्थात्सुखाच्च ।

इति वदन्ति ॥ २१ ॥

किञ्च ।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥

आत्मसाक्षात्कारलाभ एव परमो लाभस्तल्लब्धेरसाधारणं कारणं योगसिद्धिरपि परमलाभ एवेति मत्वा यमिति कार्यकारणयोरभेदेन निर्देशः । सदानन्दैकरसस्यात्मन उपलब्धेः परमकारणम् निर्विकल्पकसमाधिं तत्कार्यमात्मलाभं च लब्ध्वा योगारूढो यतिः क्वचित्प्राप्तमपरमनात्मविषयकं लाभं ततस्सर्वस्य ब्रह्ममात्रत्वोपलम्भकनिर्विकल्पकसमाधेस्तत्फलादात्मलाभादधिकमुत्कृष्टं न मन्यते आत्मव्य-

तिरिक्तस्य सर्वस्यापि पदार्थस्य मायिकत्वेनासत्त्वात्तुच्छत्वा-त्सोपद्रवत्वाद्दुःखबीजवत्त्वान्मिथ्यात्वाच्च धर्मादेर्लाभं सन्तो न लाभाय मन्यन्त इत्यर्थः। ननु ब्रह्मविष्ण्वादिलोकप्राप्तिस्तु विदुषोलाभोऽस्त्येवेति चेन्न सत्यलोकवैकुण्ठादेरपि मायिकत्वेनो-क्तदोषवत्तया मिथ्यात्वाविशेषात्तल्लाभस्ततस्वानित्वलाभोप्य-लाभ एव भवति। आत्मलाभान्न परं विद्यत इति स्मृत्यैवात्म-लाभादतिरिक्तलाभस्य लाभत्वनिषेधान्नित्यनिरतिशयानन्द-रूपस्यात्मन एव लाभो लाभाय भवति तस्माद्ब्रह्मविदात्म-साक्षात्कारकारणत्वादमुमेव योगं परमं लाभं मन्यते न ततो-न्यं लाभमित्यर्थः । किञ्च यस्मिन् यस्यामन्तःकरणपरिपाक-विशेषावस्थायां स्थितः बाह्यमाभ्यन्तरं च विस्मृत्य बह्माका-रतया वृत्त्या पूर्णानन्दैकरसब्रह्मरूपेण संस्थितो ब्रह्मविद्यतिः गुरुणा खड्गपातादिजनितेनान्येन वाऽऽध्यात्मिकेन महता दुःखे-न न विचाल्यते स्वरूपाच्चालयितुं न शक्यते बाह्याभ्यन्तरवि-क्षेपशतैर्विपरीतभावं प्रापयितुं न शक्यत इत्यर्थः ।

केचित्तु अथैतदेव प्रकटयति यदिति । यत्सुखं लब्ध्वा ततः सकाशादपरं लाभमधिकं न मन्यते तस्यैव निरतिशय-सुखत्वात् यथा सुषुप्तिसुखं प्राप्तः कश्चिद्भोजनाद्यर्थं प्रबोधि-तोपि कुप्यति तादृशस्य प्रबोधनेपि प्रत्यवायश्रवणात् ।"तस्मा-दायतं न बोधयेत् दुर्भिषज्यं हास्य भवतीति श्रुतिः" । भाष्यम् यस्मात्सुषुप्तौ निरतिशयं सुखं भवति तस्मात्कारणादायतं विस्तृतहस्तपादं निद्रितं पुरुषं न बोधयेज्जागरं न प्रापयेत् हि यतः अस्य जागरं प्रापितस्य दुर्भिषज्यमप्रतीकारं दुःखं भवतीति। किञ्च यस्मिन्सुखे स्थिरीभूतः सन् गुरुणा महतापि रोगशोकादि-दुःखेन न विचाल्यते स्वावस्थां न प्राप्यत इत्यर्थ इत्याहुः ।

अन्येतु इदं द्वयमित्थं योजयन्ति । तथाहि योगसिद्धिकालं प्रकारान्तरेण प्रकटयति सुखमिति। आत्मन्येव तोषे हेतुमाह सुखमित्यन्ये। यत्र यस्मिन्नवस्थाविशेषे आत्यन्तिकमनन्तं निरतिशयं ब्रह्मस्वरूपं विषयसुखाद्व्यावर्तयति अतीन्द्रियं विषयेन्द्रियसन्निकर्षाजन्यं सौषुप्तसुखाद्व्यावर्तयति बुद्धिग्राह्यं रजस्तमोमलशून्ययेन्द्रियनिरपेक्षया बुद्ध्या ग्राह्यं सुखं वेत्त्यनुभवति यत्र च स्थितोयं विद्वान् तत्त्वतः आत्मस्वरूपान्न चलति न प्रच्यवते तं योगसंज्ञितं विद्यादिति परेणान्वयः । सुषुप्तौ बुद्धेः लीनत्वेपि समाधौ निर्वृतिकायास्तस्याः सत्त्वात्तद्ग्राहकत्वं युक्तम् "लीयते तु सुषुप्तौ तन्निगृहीतं न लीयत इति" गौडपादोक्तेः॥२१॥

प्रकारान्तरेण प्रकृतं योगं विशिनष्टि यमिति । न चलति तत्त्वत इत्युक्तमुपपादयति यमित्यन्ये । यञ्ज्ञानन्दसुखव्यञ्जकनिर्वृतिकचित्तावस्थाविशेषं लब्ध्वा निरन्तराभ्यासेन सम्पाद्य ततोधिकमपरं लाभं न मन्यते तस्मादात्मलाभादन्यल्लाभान्तरं परमार्थभूतं न चिन्तयतीत्यर्थः। आत्मलाभान्न परं विद्यत इति स्मृतेः । एवं विषयभोगवासनया समाधेर्विचलनं नास्तीत्युक्त्वा शीतवातमशकाद्युपद्रवनिवारणार्थमपि तन्नास्तीत्याह यस्मिन्परमात्मसुखमये चित्तावस्थाविशेषे स्थितो योगी गुरुणा शस्त्रनिपातादिनिमित्तेन महतापि दुःखेन न विचाल्यते किमुत क्षुद्रेणेत्यर्थः ॥ २२ ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा॥२३॥

यत्रोपरमत इत्यारभ्य बहुभिर्विशेषणैर्यो ब्रह्मानन्दाभिव्यञ्जको निर्वृतिकचित्तावस्थाविशेष उक्तस्तं चित्तावस्थाविशेषं सर्ववृत्तिनिरोधरूपं दुःखसंयोगवियोगं दुःखैः संयोगस्तेन वियोगो निखिलानर्थनिवृत्तिरूपस्तं चित्तवृत्तिमयसर्वदुःखविरो-

श्चित्वेन दुःखसंयोगाभावं योगसंज्ञितं योगशब्दवाच्यं विद्याद्विजानीयान्न तु योगशब्दानुरोधात्कञ्चित्सम्बन्धं प्रतिपद्येतेत्यर्थः । तथाच योगसूत्रम् योगश्चित्तवृत्तिनिरोध इति । योगो भवति दुःखहेति यत्प्रागुक्तं तदेतदुपसंहृतम् । शतं कृत्वा अपि पथ्यं वदितव्यमिति-न्यायेनैवम्भूते योगे निश्चयानिर्वेदयोः साधनत्वविधानायाह स यथोक्तफलो योगो निश्चयेन शास्त्राचार्यवचनतात्पर्यविषयोऽर्थः सत्य एवेत्यध्यवसायेन योक्तव्योऽभ्यसनीयः अनिर्विण्णचेतसा एतावतापि कालेन योगो न सिद्धः, किमतःपरं कष्टमित्यनुतापो निर्वेदस्तद्रहितेन चेतसा इह जन्मनि जन्मान्तरे वा सेत्स्यति किन्त्वरयेत्येव धैर्ययुक्तेन चेतसेत्यर्थः ।

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥

इति गौडपादीयोक्तेः । उत्सेक उत्सेचनं शोषणाध्यवसायेन जलोद्धरणम्।अत्रैवमाख्यायिका । कस्यचित्किल पक्षिणोऽण्डानि तीरस्थानि तरङ्गवेगेन समुद्रोऽपजहार स च समुद्रं शोषयिष्याम्येवेति प्रवृत्तः स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि चिक्षेप तदा च बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोपि नैवोपरराम यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्यस्मिन् जन्मनि जन्मान्तरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे । ततश्च दैवानुकूल्यात्कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास समुद्रस्त्वज्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन । ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददाविति । एवमखेदेन मनोनिरोधे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति ततश्च पक्षिण इव तस्याभिमतं सिद्ध्यतीति भावः ।

अन्येतु योगस्य लक्षणान्युक्त्वाऽधुनोक्तलक्षणवन्तं योगं विजानीयादित्याह तमिति बाह्योपरतत्वादिचित्तपरिपाकभेदविशिष्टोयोन्तःकरणावस्थाविशेषस्तमेव योगसंज्ञितं विद्यात् योग इति संज्ञितं संज्ञा यस्य स योगसंज्ञितस्तमुक्तलक्षणमन्तःकरणावस्थाविशेषमेव योगं विजानीयात्पण्डित इत्यर्थः। योगस्योक्तमेव लक्षणं विस्पष्टत्वार्थंम्पुनरप्याह दुःखसंयोगवियोगमिति। अत्र दुःखशब्देन तदनुबन्धिवैषयिकं सुखं च गृह्यते दुःखानामाध्यात्मिकादीनां सुखानां च संयोगः संसर्गस्तेन वियोगो यस्य स दुःखसंयोगवियोगः अप्रकाशितबाह्यसुखदुःखप्रत्ययो योन्तःकरणस्थितिविशेषस्तं योगं विद्यादित्यर्थः। एवं योगलक्षणं योगं चात्मनि पश्यन् तुष्यतीति योगफलमपि प्रतिपाद्य संसारनिमग्नस्यात्मन उद्धरणं योगेन विना नान्येन सिद्ध्यत्यतो विज्ञातात्मतत्त्वस्य यतेर्विदेहमुक्त्यै समाधिरवश्यं कर्त्तव्य इति सूचयितुं पुनः समाधेः कर्तव्यतामाह स इति। आत्मसमुद्धरणे परमसाधनमयमुक्तलक्षणोऽनेनैवात्मा समुद्ध्रियते एतच्छास्त्रप्रसिद्धं विद्वत्प्रत्यक्षञ्चेतिनिश्चयेन चित्तदार्ढ्येनाप्यनिर्विण्णचेतसा नासाग्रदर्शनमिन्द्रियनिरोधनं साम्येन कायस्थापनं मनोनिग्रहश्च क्लेशाय भवति नाहं कर्तुं शक्नोमीति समाधिकरणे यदलसत्वं तेन दोषेण युक्तं चित्तं निर्विण्णं तीव्रमोक्षेच्छया तद्रहितमनिर्विण्णं तेनानिर्विण्णेन चेतसा मुमुक्षोर्यतेः स उक्तलक्षणो योगः समाधिर्योक्तव्यः प्रयोक्तव्यो विदेहमुक्त्यै सम्यक्कर्तव्य इत्यर्थ इत्याहुः।

केचित्तु एवम्भूतो योऽवस्थाविशेषः स योगशब्दवाच्य इत्याह तमिति। योगोऽत्र परमात्मक्षेत्रज्ञयोर्योजनं यथा सुषुप्तौ परमात्मा क्षेत्रज्ञेनाश्लिष्यते। श्रुतिरपि एवमेवायं शारीर आत्मा

प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति।
एवमेव सुषुप्तिवत् शरीरः शरीरावच्छिन्न आत्मा परमात्मा
प्राज्ञेन क्षेत्रज्ञेन जीवेन परिष्वक्तो आलिङ्गने एकीभावे सति
बाह्यमान्तरं वा किञ्चिन्न वेद न जानाति इति तद्भाष्यम्। अथ
किम्भूतं योगं दुःखसंयोगवियोगं दुःखेन सह संयोगो येस्ते दुःख-
संयोगा विषयास्तेषां वियोगो यस्मिन् तं योगसंज्ञितं विद्यात्
अनेन विषयसुखमपि दुःखपक्षान्तर्भूतमिति सूचितमित्याहुः॥२३॥

समाधेः कर्त्तव्यं प्रकारमेवाह—

**सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥ २४॥**

सङ्कल्पेति। पदार्थेषु समीचीनत्वकल्पनमेव सङ्कल्पस्तस्मा-
त्प्रभवन्त्युत्पद्यन्त इति सङ्कल्पप्रभवास्तान्कामान्विषयाभिला-
षान्सर्वान् सर्वपदार्थविषयानशेषतस्त्यक्त्वा यथा परित्यक्तेऽपि
तैले लेपरूपेण पात्रे शेषस्तिष्ठति तथा कामेषु त्यक्तेष्वपि विष-
येषु रञ्जनारूपेण कामशेषो यथा न स्यात्तथा सर्वत्र कामत्यागः
कर्त्तव्यः। सति कामशेषे तदाकृष्टं मनः समाधौ न तिष्ठत्यतः
सर्वत्र देहजीवनादावपि निरपेक्षो भवेद्योगीत्यर्थः। योगसिद्धेर-
न्तरङ्गबलवत्साधनमुक्त्वा साधनान्तरमाह मनसेति। समाधौ कृते
सम्यग्ज्ञानं तेनैव मोक्षो नान्यथेत्येवं निश्चयवता कामसङ्कल्प-
योर्दूरवर्तिनैव मनसा इन्द्रियग्रामं चक्षुरादीनां वागादीनां च
सङ्घातं समन्ततः सर्वतो नियम्य तेषां प्रवृत्तिं निगृह्येत्यर्थः।
इन्द्रियैर्मनसः संयोगाकरणमेवेन्द्रियनियमनमिति मनसैवेतिप-
देन सूचितम्। तत इन्द्रियाणां मनसश्च संयोगो यथा न स्यात्तथा
स्थातव्यमित्यभिप्रायः। यद्वा समन्ततः प्रसरन्तं ज्ञानकर्मेन्द्रि-
यग्रामं तत्समूहं मनसैव नियम्य न तु वायुधारणादिप्रयासैः।

तदुक्तम् ।

न याहि चेतस्त्वमितस्ततोऽपि देहेन्द्रियाद्यैर्न कुरुष्व कर्म ।
त्वं यत्रकुत्राप्युपविश्य नित्यं विचारयस्व स्वनिदानमन्तः ॥

इति तत्पदेन सूचितम् ॥ २४ ॥

**शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥**

ब्रह्मविदुक्तलक्षण आसम्यगासीत्वा शरीरं साम्येन स्थापयित्वा दिशोऽपश्यन्नासाग्रदृष्टिं मुक्त्वा सर्वकामसङ्कल्पत्यागपूर्वकं सर्वेन्द्रियाणि निगृह्य ततः शनैःशनैः क्रमेण बाह्यविषयेभ्यस्तत इन्द्रियेभ्यस्ततोऽन्तर्विपरीतप्रत्ययेभ्यश्च मन्दमन्दमन्तःकरणमुपरमेदुपरतम् कुर्यात् मोक्षैककामनया विषयैरिन्द्रियैरसत्प्रत्ययैश्च सम्बन्धो यथा न स्यात्तथा मनसो बहिःप्रवृत्तिमुपशमयेदित्यर्थः। यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीत्येतच्छ्रुत्युक्तरीत्या वागुपलक्षितानि सर्वाणीन्द्रियाणि तत्तद्विषयैस्सह मनसि प्रविलापयेत्। प्रपञ्चकारणं तन्मनोपि ज्ञान आत्मनि अहमात्मिकायां बुद्धौ ज्ञानमहमात्मिकां बुद्धिं महत्यात्मनि महत्तत्त्वे तन्महत्तत्त्वमव्याकृते तदव्याकृतं शान्ते सर्वप्रपञ्चोपशमे निर्विशेषे परे ब्रह्मणि प्रविलाप्य ब्रह्मैवेदं सर्वमित्यादिश्रुत्यर्थावष्टम्भसमुत्पन्ननिश्चयवती दृढवृत्तिधृतिर्धैर्यं तया गृहीतया निगृहीतया बुद्ध्या पूर्वोक्तप्रविलापनेन सर्वत्र ब्रह्ममात्रावशेषत्वसंस्कारबलेन सर्वमात्मैव न ततोऽन्यदस्तीत्येवं प्रत्ययवत्या बुद्ध्या मन आत्मसंस्थं सम्यगात्मन्येव चैतन्यरूपे स्थितं निश्चलं कृत्वा सर्वमात्मानमेव पश्यन्नित्यर्थः। एवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि बाह्यमान्तरं वा वस्तु चिन्त-

नेन भावयेत् किन्तु सर्वं ब्रह्मैव भावयेदित्यर्थः । एतेन ब्रह्माकारवृत्त्या मनसो योऽन्यभावनाभावः स एष एव योग इति सूचितं भवति । एतत्सर्वमर्थमभिप्रेत्य योगतारावल्यामप्युक्तम् ।

असमर्था यदाभ्यासे राजयोगं तदाचरेत् ।
येन स्यात्तुरीयावस्था सा पक्वैवोन्मना भवेत् ॥ १ ॥
प्रसह्य सङ्कल्पपरम्पराणां संच्छेदने सन्ततसावधानः ।
आलम्बनाशादपचीयमानं शनैः शनैः शान्तिमुपैति चेतः॥२॥
प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते ।
अहो बुधा निर्मलदृष्टयोऽपि किञ्चिन्न पश्यन्ति जगत्स्वरूपम् ॥३॥
इति ।

अन्ये तु इदं द्वयमित्थम् योजयन्ति । केन क्रमेण योगः कर्तव्य इत्याकाङ्क्षायामाह सङ्कल्पेति । सङ्कल्पो शोभनाध्यासः प्रभव उत्पादको येषां तान् शोभनाध्यासप्रभवान् कामानिदं मे स्यादिदं मे स्यादित्येवंरूपान्विषयाभिलाषान् सर्वान् ब्रह्मलोकपर्यन्तानशेषतो निरवशेषान् सवासनांस्त्यक्त्वा विचारजन्येनाशोभनत्वनिश्चयेन शोभनाध्यासबाधात्परित्यज्येत्यर्थः । शोभनाध्यासाधीनानां सर्वेषां कामानां त्यागस्य योगानुष्ठानाङ्गत्ववद्विवेकयुक्तेन मनसा करणग्रामस्य सर्वतो नियमनमपि तत्राङ्गत्वेन कर्तव्यमित्याह मनसैव विवेकयुक्तेनेन्द्रियग्रामम् चक्षुरादिकरणसमूहम् समन्ततः सर्वेभ्यो विषयेभ्यः विनियम्य प्रत्याहृत्य शनैःशनैरुपरमेदित्यन्वयः ॥ १४ ॥

कामपूर्वकत्वादिन्द्रियप्रवृत्तेः कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्यादित्याशङ्क्याह शनैरिति । धृतिर्धैर्यमखिन्नता तया गृहीतया धैर्ययुक्तया बुद्ध्याऽवश्यकर्तव्यतानिश्चयरूपया

यदा कदाचिदवश्यम्भविष्यत्येव योगः किं त्वरयेत्येवंरूपया श-नैर्गुरूपदिष्टमार्गेण भूमिकाजयक्रमेणोपरमेत् मनो निसंरूष्यात् सहसा विषयेभ्यः सकाशान्मनस उपरमेन स्वास्थ्यं सम्भवती-त्यभिप्रायः । तथाच श्रुतिः ।

यच्छेद्वाङ् मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ज्ञानमा-त्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीति ।

वागिति(१) । वाचम् लौकिकीं वैदिकीं च मनसि नियच्छेत् वाग्वृत्तिनिरोधेन मनोवृत्तिमात्रशेषो भवेदित्यर्थः । चक्षुरादिनि-रोधोऽप्येतस्यां भूमौ द्रष्टव्य इति वागादिनिरोधः प्रथमा भूमिः तन्मनः कार्यज्ञानेन्द्रियसहकारिनानाविधविकल्पसाधनम् कर-णम् ज्ञाने जानातीति ज्ञानं तस्मिन् ज्ञातर्यात्मनि ज्ञातृत्वो-पाधावहङ्कारे नियच्छेत् मनोव्यापारान्परित्यज्याहङ्कारमात्रं परिशेषयेत् इति निर्मनस्त्वं द्वितीया भूमिः । तच्च ज्ञानम् ज्ञातृत्वोपाधिमहङ्कारमात्मनि महत्तत्वे सर्वव्यापके नियच्छेत् इत्यहङ्काररराहित्यं तृतीया भूमिः । तच्च महत्तत्वं समष्टिबुद्धिरूपम् शान्ते द्विविधो ह्यहङ्कारोऽयमहमेतस्य पुत्र इत्येवं व्यक्तम-भिमन्यमानो विशेषरूपो व्यष्ट्यहङ्कार एकः अस्मीत्येतावन्मात्र-मभिमन्यमानः सामान्यरूपो परः । स च हिरण्यगर्भो महा-नात्मेति चोच्यते । ताभ्यां व्यष्टिसमष्ट्यहङ्काराभ्यां विविक्ते निरुपाधिके चिदेकरसे सर्वान्तरे आत्मनि महान्तमात्मानं स-मष्टिरूपम् नियच्छेदिति महत्तत्वराहित्यम् चतुर्थी । तदेतद्भूमि-चतुष्टयमपेक्ष्य शनैः शनैरुपरमेदित्युक्तम् । एवं तत्कारणमव्यक्त-मपि नियच्छेत्ततो निरुपाधिकस्त्वंपदलक्ष्यः शुद्ध आत्मा सा-क्षात्कृतो भवति शुद्धे हि चिदेकरसे प्रत्यगात्मन्यव्यक्तमनिर्वाच्यम् मायारूपं प्रकृतिरुपाधिस्सा च प्रथमसामान्याहङ्काररूपम्

(१) वागिति प्रथमान्तं छान्दसत्वान्न विरुद्धम् ।

महत्तत्त्वं नाम धृत्वाव्यक्तो भवति ततो बहिर्विशेषाहङ्काररूपेण ततो बहिर्मनोरूपेण ततो बहिर्वागादीन्द्रियेणाव्यक्तो भवति तस्मादुपाधेर्विनिर्मुक्ते प्रत्यगात्मनि मनः स्थापयित्वा नान्यत्किञ्चित्स्मरेदित्याह आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेदिति । आत्मनि निरुपाधिके प्रतीचि संस्था समाप्तिर्यस्य तदात्मसंस्थं सर्वप्रकारवृत्तिशून्यम् स्वभावसिद्धात्माकारमात्रावशिष्टं मनः कृत्वा धृतियुक्तया विवेकबुद्ध्या सम्पाद्यासम्प्रज्ञातसमाधिस्थः सन् किञ्चिदप्यनात्मानमात्मानम् वा न चिन्तयेत् न वृत्त्या विषयीकुर्यात् अनात्माकारवृत्तौ हि व्युत्थानमेव स्यात् आत्माकारवृत्तौ च सम्प्रज्ञातः समाधिरित्यसम्प्रज्ञातसमाधिस्थैर्याय कामपि चित्तवृत्तिं नोत्पादयेदित्यर्थः ॥ २५ ॥

ननु विषयलम्पटस्य मनस आत्मनि संस्थितिर्न सम्भवति तद्विषयवासनाभिः रागादिभिश्च विषयप्रवृत्त्येकस्वभावत्वान्मनसः स्वभावो दुरतिक्रम इति न्यायेन स्वभावतः प्राप्तप्रवृत्तिनिरोधो न सिद्ध्यति तदसिद्धौ कुत आत्मनि संस्थितिरित्याशङ्कायां न विषयेषु सत्यत्वसमीचीनत्वेष्टत्वबुद्धौ केवलान्मनसः प्रवृत्तिस्तद्धेतवो रागादयश्च विकल्पो न हि वस्तु मायामात्रमिदं द्वैतं त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रमित्यादिश्रुतिभिरिदं सर्वं मिथ्याकल्पितत्वाच्छुक्तिरजतवदित्यादियुक्तिभिश्च विषयाणां मिथ्यात्वे सिद्धे विषये सत्यत्वसमीचीनत्वेष्टत्वबुद्धयो नश्यन्ति रागादयश्च । तेन मनसश्च प्रवृत्तिर्न सम्भवति क्वचिद्वासनया यदा मनः प्रवर्त्तते तदा विषयमिथ्यात्वबुद्ध्या ततो निवर्त्य स्वरूप एव स्थापनीयमित्याह ।

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

यत इति । वासनावेगाच्चञ्चलं चपलं रागादिदोषग्रस्तत्वादस्थिरमव्यवस्थं मनः स्वविषयमात्मानमनादृत्य वासनया वा रागादिना वा हठाद्वा ज्ञातमज्ञातं च सत् यतो यतो यं यं विषयमुद्दिश्य निश्चरति निर्गच्छति ततस्ततस्तस्मात्तस्माद्विषयान्नियम्य तत्र विषये मिथ्यात्वं दुःखप्रदत्वं बन्धकत्वमात्मव्यतिरेकेणासत्त्वं चोद्भाव्य वैरस्यमापाद्यैवैतन्मनः पुनराकृष्य चिद्भावं गमयित्वाऽऽत्मन्येव वशं नयेत् । आत्मनि नित्यत्वचिद्रूपत्वाखण्डानन्दैकरसत्वस्वरूपत्वादिप्रकाशनेन रुचिं सम्पाद्य नियमेनात्मस्थमेव कुर्यादित्यर्थः । तदुक्तम् वासिष्ठे ।

हस्तं हस्तेन सम्पीड्य दन्तैर्दन्तान्विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ १ ॥
चित्तमेकं न शक्नोति जेतुं स्वातन्त्र्यवर्ति यत् ।
ध्यानवार्तां वदन्मूढः स किं लोके न लज्जते ॥ २ ॥
इति । तथा विष्णुपुराणेऽप्युक्तम् ।
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुनिः ।
चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥ १ ॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ॥
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥२॥ इति ॥२६॥

पुनःपुनर्विषयेभ्यस्तत्तद्दोषोद्घाटनपूर्वकमाकृष्य मन आत्मन्येव स्थापयित्वाऽत्यन्तश्रद्धया चिरकालं नित्यनिरन्तरम् चित्प्रत्ययावृत्तिमेव कुर्वतो योगिनो यतेर्बाह्यवासनानां तत्प्रत्ययानां च निःशेषक्षये सति यदा ब्रह्मणि मनः प्रशान्तिमेति तदा सुखं ब्राह्ममनुत्तममाविर्भवतीत्याह ।

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

प्रशान्तेति । शान्तरजसं नित्यनिरन्तरं समाधिनिष्ठाय प्रशान्तो विनष्टो रजोगुणः रज इति तमसोऽप्युपलक्षणम् तमोगुणश्च स्वकार्यैः कामक्रोधलोभमोहाहङ्कारममकारादिभिस्सह यस्य स शान्तरजास्तं शान्तरजसं केवलशुद्धस्वभावमत एवाकल्मषम् अन्तःकरणस्य कल्मषम् भेदवासना एव राजसास्तामसाः सत्त्वमिश्रा भूतभौतिकगोचरा यास्ताः संशो न विद्यन्ते यस्य चित्ते सोऽकल्मषस्तमत एव प्रशान्तमनसं विक्षेपविपरीतभावनाहेत्वोः रजस्तमोगुणयोः स्वकार्ययोर्निःशेषविनाशाद्वृत्तिशून्यतया प्रशान्तं प्रकर्षेण शान्तं प्रशान्तमविषयाकारतामेव समापन्नं मनो यस्य तं प्रशान्तमनसमत एव ब्रह्मभूतं ब्रह्मैवाहमित्युपाधिकृतपरिच्छित्तिं परित्यज्य पूर्णात्मनैव स्थितमेनं योगिनं ब्रह्मविदं यतिमनुत्तमं यस्मादुत्तमं नास्ति तदनुत्तममनुपमं नित्यं निरतिशयं साधनानपेक्षमयत्नसिद्धमक्षय्यमात्मभूतमात्मैकवेद्यं ब्राह्मं सुखमुपैति तदा प्राप्नोतीत्यर्थः । साधननिरपेक्षापारसुखार्णवः सुषुप्तौ सर्वप्रत्यक्षः एषोऽस्य परमानन्द इत्यादिश्रुतिप्रसिद्धश्चेति प्रसिद्धिद्योतनार्थो हिशब्दः ।

अन्ये तु इदं द्वयमित्थं योजयन्ति । ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादतिचञ्चलस्यास्थिरस्य नैश्चल्यं नैश्चिन्त्यं वा कुत इत्याशङ्क्याह यत इति । एवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी यतो यतो यस्माद्यस्माच्छब्दादेर्विषया-

न्निमित्ताद्रागद्वेषादेश्च चञ्चलं विषयाभिमुखं सन्मनो निश्चरति विषयाभिमुखीं समाधिविरोधिनीं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमां वृत्तिमुत्पादयति ततस्ततो विक्षेपनिमित्ताल्लयनिमित्ताच्च नियम्यैतन्मनो निवृत्तिकम् कृत्वाऽऽत्मन्येव स्वप्रकाशपरमानन्दघने वशं नयेन्निरुन्ध्याद्यथा न विक्षिप्येत न वा लीयेतेति आत्मगोचरं कुर्यान्न त्वनात्मगोचरमित्येवकारार्थः। ननु शब्दादेरिष्टसाधनात्मनसो नियमनम् कथमिति चेत्तस्याः क्षयिष्णुत्वदुःखत्वमिश्रत्वादिनाऽनिष्टसंसारहेतुत्वालोचनेन तत्र तत्र वैराग्योत्पादनेन ततस्ततो नियमनं सम्भवतीत्यवेहि। एतच्च विवृतं गौडपादाचार्यैः—

उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ १ ॥
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्।
अजम् सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ २ ॥
लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ३ ॥
नास्वादयेत्सुखन्तत्र निःसङ्गप्रज्ञया भवेत्।
निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥ ४ ॥
यदा न लीयते चित्तम् न च विक्षिप्यते पुनः।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ५ ॥

इति पञ्चभिः श्लोकैः। उपायेन वक्ष्यमाणेन वैराग्याभ्यासेन कामभोगयोर्विक्षिप्तं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमयापि वृत्त्या परिणतम् मनो निगृह्णीयान्निरुन्ध्यादात्मन्येवेत्यर्थः। कामभोगयोरिति चिन्त्यमानावस्थाभेदेन

द्विवचनम् । तथा लीयतेऽस्मिन्निति लयः सुषुप्तं तत्र सुप्रसन्नमायासरहितमपि मनो निगृह्णीयादेव । सुप्रसन्नम् चेत्कुतो निगृह्यते तत्राह यथा कामो विषयगोचरप्रमाणादिवृत्त्युत्पादनेन समाधिविरोधी तथा लयोऽपि निद्राख्यवृत्त्युत्पादनेन समाधिविरोधी सर्ववृत्तिनिरोधो हि समाधिः । अतः कामादिकृतविक्षेपादिव श्रमादिकृतलयादपि मनो निरोद्धव्यमित्यर्थः ॥ १ ॥

उपायेन निगृह्णीयात्केनेत्युच्यते सर्वं द्वैतमविद्याविजृम्भितमल्पं दुःखमेवेत्यनुस्मृत्य यो वै भूमा तत्सुखं नाल्पे सुखमस्ति अथ यदल्पं तन्मर्त्यं तद्दुःखमिति-श्रुत्यर्थं गुरूपदेशादनु पश्चात्पर्यालोच्य कामांश्चिन्त्यमानावस्थान्विषयान्भोगान्भुज्यमानावस्थांश्च विषयान्निवर्तयेन्मनःसकाशादिति शेषः । कामश्च भोगश्च कामभोगं तस्मान्मनो निवर्तयेदिति वा । एष द्वैतस्मरणकाले वैराग्यभावनोपाय इत्यर्थः । द्वैतविस्मरणं तु परमोपाय इत्याह अजं ब्रह्म सर्वं न ततोऽतिरिक्तं किञ्चिदस्तीति शास्त्राचार्योपदेशादनन्तरमनुस्मृत्य तद्विपरीतद्वैतजातं न पश्यत्येव अधिष्ठाने ज्ञाते कल्पितस्याभावात् । पूर्वोपायापेक्षणासूचनार्थस्तुशब्दः ॥ २ ॥

एवं वैराग्यभावनातत्त्वदर्शनाभ्यां विषयेभ्यो निवर्त्यमानं चित्तं यदि दैनन्दिनलयाभ्यासवशाल्लयाभिमुखं भवेत्तदा निद्राशेषाजीर्णबह्वशनश्रमाणां लयकारणानां निरोधेन चित्तं सम्यक्प्रबोधयेत् उत्थानप्रयत्नेन । यदि पुनरेवं प्रबोध्यमानं चित्तं दैनन्दिनप्रबोधाभ्यासवशात्कामभोगयोर्विक्षिप्तं स्यात्तदा वैराग्यभावनया तत्त्वसाक्षात्कारेण च पुनः शमयेत् । एवं पुनः पुनरभ्यसतो लयात्सम्बोधितं विषयेभ्यश्च व्यावर्तितं नापि समप्राप्तं अन्तरावस्थं चित्तं स्तब्धीभूतं सक-

षायं रागद्वेषादिवासनावासनाशेन स्तब्धीभावाख्येन कषायेण दोषेण युक्तं विजानीयात्समाहितात्चित्ताद्विवेकेन जानीयात्। ततश्च नेदं समाहितमित्यवगम्य लयविक्षेपाभ्यामिव कषायादपि चित्तं निरुन्ध्यात्। ततश्च लयविक्षेपकषायेषु परिहृतेषु परिशेषाच्चित्तेन समं ब्रह्म प्राप्यते तच्च समप्राप्तं चित्तं कषायवशभ्रान्त्या न चालयेत् विषयाभिमुखं न कुर्यात् किंतु धृतिगृहीतया बुद्ध्या लयकषायप्राप्तेर्विविच्य तस्यामेव समप्राप्तावतियत्नेन स्थापयेत् ॥ ३ ॥

तत्र समाधौ परमसुखव्यञ्जकेऽपि सुखं नास्वादयेत् एतावन्तं कालमहं सुखीति सुखास्वादरूपां वृत्तिं न कुर्यात्समाधिभङ्गप्रसङ्गादिति प्रागेव कृतव्याख्यानम्। प्रज्ञया यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेत्येवंभावनया निःसङ्गो निःस्पृहः सर्वसुखेषु भवेत्। अथवा प्रज्ञया सविकल्पसुखाकारवृत्तिरूपया सह सङ्गं परित्यजेत्। ननु स्वरूपसुखमपि निर्वृत्तिकेन चित्तेन मानुभवेत् न स्वभावप्राप्तस्य वारयितुमशक्यत्वात्। एवं सर्वतो निवर्त्य निश्चलं प्रयत्नवशेन कृतं चित्तं स्वभावचाञ्चल्याद्विषयाभिमुखतया निश्चरद्बहिर्निर्गच्छत् एकीकुर्यात् प्रयत्नतः निरोधप्रयत्नेन समे ब्रह्मण्येकतां नयेत् ॥४॥

समप्राप्तं चित्तं कीदृशमित्युच्यते यदा न लीयते नापि स्तब्धीभवति तामसत्वसाम्येन लयशब्देनैव स्तब्धीभावस्योपलक्षणात्। न च विक्षिप्यते पुनः न च शब्दाद्याकारां वृत्तिमनुभवति नापि सुखमास्वादयेत्। राजसत्वसाम्येन सुखास्वादस्यापि विक्षेपशब्देनोपलक्षणात् पूर्वभेदनिर्देशस्तु पृथक्प्रयत्नकरणाय। एवं लयकषायाभ्यां विक्षेपसुखास्वादाभ्यां रहितमनिङ्गनम् इङ्गनं चलनं सवातप्रदीपवद्विषयाभिमु

ख्यरूपं तद्रहितं निवातदीपकल्पमनाभासं न केनचिद्विषयाकारेण भासत इत्येतत्—कषायसुखास्वादयोरुभयान्तर्भाव उक्त एव । यदैवं दोषचतुष्टयरहितं चित्तं भवति तदा चित्तं ब्रह्मनिष्पन्नं समं ब्रह्मप्राप्तं भवतीत्यर्थः ॥ ५ ॥

एतादृशश्च योगः श्रुत्या प्रतिपादितः ।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ इति ।

एतन्मूलकमेव च योगश्चित्तवृत्तिनिरोध इति सूत्रम् । तस्मायुक्तं ततस्ततो नियम्यैतदात्मन्येव वशं नयेदिति ॥ २६ ॥

एवं मनसो वशीकरणेनात्मनि प्रलीने किं स्यादित्याशङ्क्याह प्रशान्तमनसमिति । एनं योगिनमुत्तमं निरतिशयं सुखमुपैत्युपगच्छति । मनस्तद्वृत्त्योरभावे सुषुप्तौ स्वरूपसुखाविर्भावप्रसिद्धिं द्योतयति हिशब्दः । एनं कीदृशं प्रकर्षेण शान्तं निर्वृतिकतया निरुद्धं संस्कारमात्रशेषं मनो यस्य तं प्रशान्तमनसम् । वृत्तिशून्यतया निर्मनस्कत्वे हेतुं विशेषणद्वयेन सूचयति शान्तरजसमकल्मषमिति । शान्तं निवृत्तं विक्षेपकं रजो यस्य तं विक्षेपशून्यम् न विद्यते कल्मषं लयहेतुभूतं तमो यस्य तं लयशून्यम् । यद्वा मोहादिक्लेशप्रतिबन्धाद्योगिनो यथोक्तसुखाप्राप्तिरित्याशङ्क्योक्तम् अकल्मषं संसारहेतुधर्माधर्मादिवर्जितमित्यर्थः । तस्याऽस्मदादिविलक्षणत्वमाह ब्रह्मभूतं ब्रह्मैव सर्वमिति निश्चयेन समं ब्रह्म प्राप्तं जीवन्मुक्तमित्यर्थः ॥२७॥

उत्तमं सुखं योगिनो भवतीत्युक्तमेव स्फुटयति ।

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८ ॥

युञ्जन्निति । एवं मनसैवेन्द्रियग्राममित्याद्युक्तक्रमेणात्मानं मनः सदा सर्वदा युञ्जन्समादधद्योगी योगेन नित्यसम्बन्धी विगतकल्मषः विगतमलः संसारहेतुधर्माधर्मरहितः सुखेनानायासेन ईश्वरोपासनया रागद्वेषादिसर्वविघ्ननिवृत्त्या ब्रह्मसंस्पर्शं ब्रह्मणा सह सम्यक्त्वेन विषयास्पर्शेन स्पर्शस्तादात्म्यं यस्य तद्विषयासंस्पर्शि ब्रह्मस्वरूपम् अत्यन्तं सर्वानन्ताऽपरिच्छेदानतिक्रान्तं निरतिशयं सुखमानन्दमश्नुते व्याप्नोति सर्ववृत्तिशून्येन सूक्ष्मेण मनसा परमसुखानुभवः समाधावेव भवतीत्यर्थः । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मदर्शिभिरित्यादिश्रुतेः । अत्र त्वनायासेनेत्यन्तरायनिवृत्तिरुक्ता । ते चान्तराया योगप्रतिबन्धका व्याध्यादयस्तन्निवृत्त्युपायाश्चेश्वरप्रणिधानादयो योगशास्त्रे विस्तरेण प्रतिपादिताः । तथाहि व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः । चित्तं क्षिपन्ति योगादपनयन्तीति चित्तविक्षेपाः योगप्रतिपक्षाः । तत्र संशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधेः साक्षाद्विरोधिनी व्याध्यादयस्तु सप्त वृत्तिसहचरिततया तद्विरोधिन इति विभागः। व्याधिर्धातुवैषम्यनिमित्तो विकारो ज्वरादिः । स्त्यानमकर्मण्यता गुरुणा शिक्ष्यमाणस्याप्यासनादिकर्मानर्हतेति यावत् । योगः साधनीयो न वेत्युभयकोटिघटितविज्ञानं संशयः अतद्रूपप्रतिष्ठत्वेन विपर्ययन्तर्गतोऽपि सन्नुभयकोटिस्पर्शित्वैककोटिस्पर्शित्वरूपावान्तरविशेषविवक्षयाऽत्र विपर्ययाद्भेदेनोक्तः । प्रमादः समाधिसाधनानामनुष्ठानसामर्थ्येऽप्यननुष्ठानशीलता विषयान्तरव्यापृततया योगसाधनेष्वौदासीन्यमिति यावत् । आलस्यं

सत्यामप्यौदासीन्यप्रच्युतौ कफादिना तमसा च काय-
चित्तयोर्गुरुत्वं व्याधित्वेनाप्रसिद्धमपि योगविषये प्रवृत्ति-
विरोधि । अविरतिश्चित्तस्य विषयविशेषे ऐकान्तिकोऽभि-
लाषः । भ्रान्तिदर्शनं योगासाधनेऽपि तत्साधनत्वबुद्धिस्तथा
तत्साधनेष्वसाधनत्वबुद्धिः । अलब्धभूमिकत्वं समाधिभूमेरेका-
ग्रतायाः अलाभः क्षिप्तमूढविक्षिप्तरूपमिति यावत् । अन-
वस्थितत्वं लब्धायामपि समाधिभूमौ प्रयत्नशैथिल्या-
च्चित्तस्य तत्राप्रतिष्ठितत्वम् । त एते चित्तविक्षेपाः नवयोगप्रति-
बन्धका योगेऽन्तराया इति चाभिधीयन्ते । दुःखदौर्मनस्याङ्गमे-
जयत्वश्वासप्रश्वासाः विक्षेपसहभुवः । दुःखं चित्तस्य राजसः
परिणामो बाधनालक्षणः । तच्चाध्यात्मिकम् शारीरम् मानसं च
व्याधिवशात्कामादिवशाच्च भवति । आधिभौतिकं व्याघ्रादि-
जनितम् । आधिदैविकं ग्रहपीडादिजनितं द्वेषाख्यवृत्तिपर्यवसानहेतु-
त्वात्समाधिविरोधि । दौर्मनस्यमिच्छाविघातादिबलवद्दुःखा-
नुभवजनितश्चित्तस्य तामसः परिणामविशेषः क्षोभापरपर्या-
यस्तद्धीभावः स तु कषायत्वात्क्षयवत्समाधिविरोधी । अङ्गमेज-
यत्वमङ्गकम्पनमासनस्थैर्यविरोधि । प्राणेन बाह्यस्य वायोरन्तः-
प्रवेशनं श्वासः समाध्यङ्गरेचकविरोधी । प्राणेन कौष्ठ्यस्य वायो
र्बहिर्निःसारणम् प्रश्वासः समाध्यङ्गपूरकविरोधी । समाहि-
तचित्तस्यैते न भवन्ति विक्षिप्तचित्तस्यैवैते भवन्तीति विक्षे-
पसहभुवोऽन्तराया एव । एतेऽभ्यासवैराग्याभ्यां निरोद्धव्याः
ईश्वरप्रणिधानेन च । तीव्रसंवेगानामासन्नः समाधिलाभ
इति प्रस्तुते ईश्वरप्रणिधानाद्वेति पक्षान्तरमुक्त्वा प्र-
णिधेयमीश्वरं क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष
ईश्वरः । तत्र निरतिशयं सर्वज्ञबीजम् । स पूर्वेषामपि

गुरुः कालेनानवच्छेदात् । इति त्रिभिः सूत्रैः प्रतिपाद्य तत्प्रणिधानं द्वाभ्यामसूत्रयत् तस्य वाचकः प्रणवः । तज्जपस्तदर्थभावनमिति। ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च । ततः प्रणवजपरूपात्तदर्थध्यानरूपाच्चेश्वरप्रणिधानात्प्रत्यक्चेतनस्य पुरुषस्य प्रकृतिविवेकेनाधिगमः साक्षात्कारो भवति उक्तानामन्तरायाणामभावोपि भवतीत्यभिप्रायः । अभ्यासवैराग्याभ्यामन्तरायनिवृत्तौ कर्तव्यायामभ्यासदार्ढ्यार्थमाह तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः । तेषामन्तरायाणां प्रतिषेधार्थमेकस्मिन्कस्मिंश्चिदभिमते तत्त्वेऽभ्यासश्चेतसः पुनः पुनर्निवेशनं कार्यम् । तथा मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् । मैत्री सौहार्दम् करुणा कृपा मुदिता हर्षः उपेक्षा औदासीन्यम् । सुखादिशब्दैस्तद्वन्तः प्रतिपाद्यन्ते सर्वप्राणिषु सुखभोगापन्नेषु साध्वेतन्मम मित्राणां सुखित्वमिति मैत्रीं भावयेन्न त्वीर्ष्याम् । दुःखितेषु कथं नु नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव भावयेन्नोपेक्षां न वा हर्षम् । पुण्यवत्सु पुण्यानुमोदनेन हर्षं कुर्यान्न द्वेषं न वोपेक्षाम् । अपुण्यवत्सु चौदासीन्यमेव भावयेन्नानुमोदनं न वा द्वेषम् एवमस्य भावयतः शुक्लो धर्म उपजायते ततश्च विगतरागद्वेषादिमलं चित्तं प्रसन्नं सदेकाग्रतायोग्यं भवति। मैत्र्यादिचतुष्टयं चोपलक्षणम् । अभयं सत्त्वसंशुद्धिरित्यादीनाम् अमानित्वमदम्भित्वमित्यादीनां च धर्माणां सर्वेषां शुभवासनारूपत्वेन मलिनवासनानिवर्तकत्वात् । रागद्वेषौ महाशत्रू सर्वपुरुषार्थघातकौ महता प्रयत्नेन परिहर्तव्याविति एतत्सूत्रार्थः । एवमन्ये प्राणायामाद्य उपायाश्चित्तस्य प्रसादनाय दर्शिताः । तदेतच्चित्तप्रसादनं भगवदनुग्रहेण यस्य जातं स अध्येतद्वचनं सुखेनेति अन्यथा मनःप्रशमानुपपत्तेरिति भावः ॥ २८ ॥

इदानीम् सर्वसंसारोच्छेदकारणं यद्ब्रह्मात्मैकत्वज्ञानं योगस्य फलभूतं तत्प्रदर्शयति ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

सर्वेति । तदेवं निरोधसमाधिना त्वंपदलक्ष्ये च शुद्धे साक्षात्कृते तदैक्यगोचरात्तत्त्वमसीतिवाक्यजन्या निर्विकल्पकसाक्षात्काररूपा वृत्तिर्ब्रह्मविद्याभिधाना जायते । ततश्च कृत्स्नाविद्या-तत्कार्यनिवृत्त्या ब्रह्मसुखमत्यन्तमश्नुत इत्युपपादयति त्रिभिः श्लोकैस्तत्र प्रथमं त्वपदलक्ष्योपस्थितिमाह सर्वेतीत्यन्ये । सर्वेषु भूतेषु स्थावरजङ्गमेषु शरीरेषु स्थितमात्मानं प्रत्यक्चेतनं साक्षिणं परमार्थसत्यमानन्दघनं साक्ष्येभ्योऽनृतजडपरिच्छिन्नदुःखरूपेभ्यो विवेकेनेक्षते साक्षात्करोति तस्मिंश्चात्मनि साक्षिणि सर्वभूतानि साक्ष्याण्याध्यासिकेन सम्बन्धेन कल्पितानि मिथ्याभूतानि परिच्छिन्नजडदुःखात्मकानि साक्षिणो विवेकेनेक्षते । क इत्याकाङ्क्षायामुक्तदर्शने चित्तसमाधानमुपायं दर्शयति योगयुक्तात्मा योगेन युक्तः समाहित आत्मान्तःकरणं यस्य स विषयेषूपाधिषु तदनुरोधाद्विषममेव दर्शनमुक्तदर्शनप्रतिबन्धकं निराकरोति सर्वत्रसमदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषयेषु सर्वभूतेषु सममविषमं निर्विशेषं ब्रह्मात्मैकत्वेन दर्शनं ज्ञानं यस्य स सर्वत्रसमदर्शन इत्यर्थः । शब्दानुमानागोचरयथार्थविशेषवस्तुगोचरयोगजप्रत्यक्षेण ऋतम्भरसञ्ज्ञेन युगपत्सर्वं सूक्ष्मं व्यवहितं विप्रकृष्टं च तुल्यमेव पश्यतीति सर्वत्र समं दर्शनं यस्येति सर्वत्रसमदर्शनः सन्नात्मानमनात्मानं च योगयुक्तात्मा यथावस्थितमीक्षते इति युक्तम् । अथवा यो

योगयुक्तात्मा यो वा सर्वत्र समदर्शनः स आत्मानमीक्षत इति योगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ यथा हि चित्तवृत्तिनिरोधः साक्षिसाक्षात्कारहेतुस्तथा जडविवेकेन सर्वानुस्यूतचैतन्यपृथक्करणमपि । नावश्यं योग एवापेक्षितः । अत एव वसिष्ठः ।

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ १ ॥
असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः ।
प्रकारौ तौ ततो देवो जगाद परमः शिवः ॥२॥ इति ।

चित्तनाशस्य साक्षिणः सकाशात्तदुपाधिभूतचित्तस्य पृथक्करणं तददर्शनं च तस्योपायद्वयम् । एको योगो सम्प्रज्ञातसमाधिः सर्ववृत्तिनिरोधरूपो द्वितीयस्तु साक्षिणि कल्पितं साक्ष्यमनृतत्वान्नास्त्येव साक्ष्येव तु परमार्थः सत्यः केवलो विद्यत इति विचारः । तत्र प्रथममुपायं प्रपञ्चपरमार्थतावादिनो हिरण्यगर्भादयः प्रपेदिरे तेषां परमार्थस्य चित्तस्यादर्शनेन साक्षिदर्शने वृत्तिनिरोधातिरिक्तोपायासम्भवात् । श्रीमच्छङ्करभगवत्पूज्यपादमतोपजीविनस्त्वौपनिषदाः प्रपञ्चानृतत्ववादिनो द्वितीयमेवोपायमुपेयुः तेषां ह्यधिष्ठानज्ञानदार्ढ्ये सति तत्र कल्पितस्य बाधितस्य चित्तस्य तद्दृश्यस्य दर्शनमनायासेनोपपद्यते अत एव भगवत्पूज्यपादाः कुत्रापि ब्रह्मविदां योगापेक्षां न व्युत्पादयाम्बभूवुः । अत एव चौपनिषदाः परमहंसाः श्रौते वेदान्तवाक्यविचार एव ब्रह्मसाक्षात्काराय गुरुमुपसृत्य प्रवर्त्तन्ते न तु योगे विचारेणैव चित्तदोषनिरासेन तस्यान्यथासिद्धत्वादिति द्विक्… स्थापनकृता व्याख्या ॥ २९ ॥

एतस्यात्मैकत्वदर्शनस्य फलं दर्शयति ।

योे मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥

य इति । यो मां वासुदेवं सर्वस्यात्मानं सर्वभूतेषु पश्यति वीक्षते। सर्वञ्च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति। एवमेकत्वदर्शनमनूद्य तत्फलं दर्शयति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गच्छामि। स च विद्वान्मे मम वासुदेवस्य न परोक्षीभवति । तस्य च मम चैकात्मकत्वात्स्वस्वरमपरोक्षत्वदर्शनं युक्तम् । यस्मादहमेव सर्वात्मैकत्वदर्शी तस्मादेकत्वदर्शनार्थं प्रयतितव्यमिति भावः । एवं शुद्धं त्वम्पदार्थं निरूप्य शुद्धं तत्पदार्थं निरूपयति य इति। यो योगी मां वासुदेवं परमेश्वरं तत्पदार्थमशेषजगत्कारणं मायोपाधिकमुपाधिविवेकेन सर्वत्र प्रपञ्चे सता स्फुरणरूपेणानुस्यूतं परमार्थसत्यमानन्दघनमनन्तं पश्यति योगजेन प्रत्यक्षेण साक्षात्करोति सर्वं च प्रपञ्चं मायया मय्यारोपितं मद्भिन्नतया मृषात्वेनैव पश्यति । उक्तदर्शनफलं दर्शयति तस्यैवं विशेषदर्शिनोऽहं तत्पदार्थो भगवान्न प्रणश्यामि ईश्वरः कश्चिन्मद्भिन्नोऽस्तीति परोक्षज्ञानविषयो न भवामि । स च योगजेन प्रत्यक्षेण मामपरोक्षीकुर्वन्नेव न प्रणश्यति परोक्षो न भवति । स्वात्मा हि मम स विद्वानतिप्रियत्वात्सर्वदा मदपरोक्षज्ञानगोचरो भवति। यद्यपि वाक्यजापरोक्षज्ञानविषयत्वं त्वम्पदार्थाभेदेनैव तथापि केवलस्यापि तत्पदार्थस्य योगजापरोक्षज्ञानविषयत्वमुपपद्यत एव । अविद्वांस्तु स्वात्मानमपि सन्तं भगवन्तम् न पश्यति अतो भगवान् पश्यन्नपि तं न पश्यति स एनमविदितो न भुनक्तीति श्रुतेः । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्युक्तेश्च । विद्वांस्तु सदैव

सन्निहितो भगवतोनुग्रहभाजनमित्येवं शरशय्यास्थभीष्मध्यानस्य युधिष्ठिरं प्रति भगवतोक्तेरित्यर्थ इत्यन्ये ॥ ३० ॥

विद्वदीश्वरयोरैकत्वदर्शनं पूर्वार्द्धेनानूद्योत्तरार्द्धेन विद्याफलं विवृणोति ।

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्त्तमानोपि स योगी मयि वर्तते ॥ ३१ ॥**

सर्वभूतस्थितमिति । एवं त्वम्पदार्थं तत्पदार्थं च शुद्धं निरूप्य तत्त्वमसिवाक्यार्थं निरूपयति सर्वेतीत्यन्ये । यस्सर्वभूतेष्वधिष्ठानतया स्थितं सर्वानुस्यूतसन्मात्रं मामीश्वरं तत्पदलक्ष्यं स्वेन त्वम्पदलक्ष्येण सहैकत्वमत्यन्ताभेदमास्थितः अहं ब्रह्मास्मीति-वेदान्तवाक्यजेन साक्षात्कारेणापरोक्षीकरोति सोऽविद्यातत्कार्यनिवृत्त्या जीवन्मुक्तो योगी ब्रह्माहमस्मीति विद्वान् सर्वथा सर्वप्रकारैः प्रारब्धकर्मप्राबल्यात्सर्वकर्मत्यागेन वा याज्ञवल्क्यादिवत् विहितकर्मणा वा जनकादिवत् प्रतिषिद्धेन कर्मणा वा दत्तात्रेयादिवद्येन केनापि प्रकारेण वर्तमानो व्यवहरन्नपि मयि परमात्मन्येवाभेदेन वर्तते सर्वथा तस्य मोक्षं प्रति नास्ति प्रतिबन्धशङ्का । देवा महाप्रभावा अपि तस्य मोक्षाभवनाय न समर्था भवन्ति किमुताऽन्ये क्षुद्रा इत्यर्थिकायास्तस्य ह न देवाश्च नाभूत्या ईशात आत्मा ह्येषां स भवतीति श्रुतेः । ब्रह्मविदो निषिद्धकर्मणि प्रवर्तकयोरागद्वेषयोरसम्भवेन निषिद्धकर्मासम्भवेऽपि ज्ञानस्तुत्यर्थं तदङ्गीकृत्येदमुक्तम् सर्वथा वर्तमानोपीति, हत्वापि स इमांल्लोकान्न हन्ति न निबद्ध्यत इति वत् । द्वितीयेऽस्थापनेपि व्याख्यानमेवमेव बोध्यम् ।

शङ्कते ।

तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

लक्षितेषु लक्षणस्य तत्सिद्धेर्व्यावर्त्तकत्वसिद्धेरलक्षितेषु अभावेषु अहेतुः अहेतुत्वं व्यावृत्त्यहेतुत्वमभावस्य लक्षणाभावात्निःस्वरूपस्य न व्यावर्तकत्वमिति भावः ।

समाधत्ते ।

न लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥

न पूर्वपक्षो युक्तः प्रतियोगिनो लक्षणस्य यदवस्थितमवस्थानं तस्यापेक्षा यत्र तादृशसिद्धेः अयमर्थः प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भवान्नाभावलक्षणापेक्षेतिभावः ।

प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

प्रमेयसिद्धिरिति मण्डूकप्लुत्या ऽनुवर्तते प्रतियोगिन उत्पत्तेः प्रागभावस्योपपत्तेरुपलम्भात् घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्वलौकिकत्वादिति भावः चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते चेष्टाया निर्व्यापारत्वेन न प्रमाणत्वं वस्तुतो लिप्यादिवत् साङ्केतिकत्वात् तस्या ऽप्यनुमाने शब्दे वा ऽन्तर्भाव इति । समाप्तं प्रमाणचतुष्टयप्रकरणम् ।

वेदस्य प्रामाण्यमाप्तप्रामाण्यात् सिद्धं न चेदं युज्यते वेदस्य नित्यत्वादित्याशङ्कायां वर्णानामनित्यत्वात् कथं तत्समुदायस्वरूपस्य वेदस्य नित्यत्वमित्याशयेन शब्दानित्यत्वप्रकरणमारभते ।

तत्र सिद्धान्तसूत्रम् ।

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १३ ॥

शब्दो ऽनित्य इत्यादि आदिमत्त्वात् सकारणत्वात् । ननु न सकारणकत्वं कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेना-

त्युपपत्तेरत आहैन्द्रियकत्वादिति । सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः परे त्वै-न्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वं सामान्यसमवाययोस्तु न तथात्वं जातित्वादिना विशेष्यत्वसम्भवे ऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः मनस इन्द्रियत्वाभावाच्च नात्मनि व्यभिचारः आत्मन ऐन्द्रियकत्वाभावाच्चेत्याहुः । अप्रयोजकत्वमाशङ्क्याह कृतकेति घटादौ यथोपचारो ज्ञानं तथैव कार्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः तथा च कार्यत्वेनानाद्यार्यसार्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति । केचित्तूपचाराद्विनाशित्वात् कृतकवदिति दृष्टान्त इति । परे तु कृतकवदुपचारात् कृतकसुखदुःखादिवद् व्यवहारात् । यथा हि सुखादौ तीव्रमन्दादि व्यवहारः शब्दे ऽप्येवं न तु नित्ये तथेत्याहुः यथाश्रुते हेतूनां व्यभिचारमाशङ्कते ॥

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥

नोक्ता हेतवः घटाभावस्य घटध्वंसस्य नित्यत्वाद् अविनाशित्वाद् आदिमत्त्वं व्यभिचारि ऐन्द्रियकत्वं सामान्ये व्यभिचारि नित्येष्वप्यनित्यवद् उपचारात् यथा घटाकाशमुत्पन्नम् अहं सुखी जात इत्यादि ।

प्रथमे व्यभिचारं परिहरति ।

तत्त्वभाक्तयोर्नानात्वस्य विभागाद् अव्यभिचारः ॥ १५ ॥

तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभागाद् विवेकात् न व्यभिचारः ध्वंसे हि उत्पत्तिमत्त्वलक्षणम् आदिमत्त्वं त्रैकालिकत्वरूपनित्यत्वाभावरूपं चानित्यत्वमस्त्यवाविनाशित्वान्नित्यत्वमौपचारिकमतो न व्यभिचारः आदिमत्त्वं प्रागभावावच्छिन्नसत्त्वं न चैतद्भावे इति वार्थः ।

द्वितीये व्यभिचारमुद्धरति ।

सन्तानानुमानविशेषणात् ॥ १६ ॥

सन्तानस्यानुमाने ऽनुमितिकरणे लिङ्गे विशेषणात् सन्तानः सन्तन्यमान एकधर्मावच्छिन्नत्वेन ज्ञायमानः, तेन सामान्यवत्त्वे सती- निर्विशेषणीयम् । इति ।

तृतीये व्यभिचारं वारयति ॥

कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् (१)॥ १७ ॥

आकाशे हेतुर्नास्त्येव आकाशे प्रादेशिकत्वव्यवहारस्तु गौणः प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्याभिधानात् न चाकाशं तादृशं तादृशत्वे वा साध्यसत्त्वान् न व्यभिचारः एवं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषय इति भावः । न चोक्तहेतूनामप्रयोजकत्वं विपक्षबाधकसत्त्वादित्याह ।

प्रागुच्चारणाद् अनुपलम्भादावरणाद्यनुपलब्धेः॥१८॥

शब्दो ऽयं यदि नित्यः स्याद् उच्चारणात् प्रागप्युपलभ्येत श्रोत्रसन्निकर्षसत्त्वात् न चात्र प्रतिबन्धकमस्तीत्याह आवरणेति आवरणादेः प्रतिबन्धकस्यानुपलब्ध्या ऽभावनिर्णयात् देशान्तरगमनं तु शब्दस्यामूर्तत्वात् न संभाव्यते अतीन्द्रियानन्तप्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पनैव लघीयसीति भावः ।

भ्रान्तस्य पूर्वपक्षपरं सूत्रद्वयम् ।

तदनुपलब्धेरनुपलम्भादावरणोपलब्धिः ॥ १९ ॥

अनुपलम्भादनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् ॥ २० ॥

---

(१) "नित्येष्वप्यव्यभिचार" इत्यंशो ऽधिको मु० पु० ।

यथा त्वया ऽऽवरणस्या ऽनुपलब्ध्या ऽभावइत्युच्यते तथा ऽऽवरणानुपलब्धेरनुपलम्भात्तदभाव आवरणोपलब्धिरेव स्यात् यदि वा ऽऽवरणानुपलब्धेरनुपलम्भे ऽपि नावरणानुपलब्धेरभावस्तदा ऽऽवरणस्यानुपलम्भादपि नावरणस्यानुपपत्तिरित्यर्थः ।

सिद्धान्तसूत्रम् ।

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्युत्तरम् । अहेतुः न मन्मतप्रतिषेधसाधनम् । अनुपलब्धेरावरणानुपलब्धेरनुपलम्भात्मकत्वादुपलम्भाभावात्मकत्वात् तस्य च मनसैव सुग्रहत्वात् तदनुपलब्धिरसिद्धेति भावः ॥

सत्प्रतिपक्षमाशङ्कते ।

अस्पर्शत्वात् ॥ २२ ॥

शब्दो नित्यः अस्पर्शत्वाद् गगनवदिति भावः

न सत्प्रतिपक्षस्त्वदीयहेतोरनैकान्तिकत्वादित्याह ।

न कर्मानित्यत्वात् ॥ २३ ॥

अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्मणि व्यभिचारात्, कान्तिकमपि साधकं स्याद् अत्राह ।

नाणु नित्यत्वात् ॥ २४ ॥

अनैकान्तिकस्य साधकत्वे ऽणोः परमाणोर्नित्यत्वं न स्याद्रूपवत्त्वादिना तत्रानित्यत्वानुमानापत्तेरित्यर्थः ।

शङ्कते ॥

संप्रदानात् ॥ २५ ॥

गुरुणा शिष्याय विद्यायाः सम्प्रदानात् । तथा च शब्दस्य प्राक् सत्त्वं सिद्धं तथा च तावत्कालस्थिरं चैनं कश्चिन्नाशयिष्यतीति न्यायान्नित्यत्वमर्थसिद्धमिति भावः ।

सिद्धान्तसूत्रम् ।

तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

शिष्ये उपसन्ने गुरुरध्यापयति यदि च शब्दो नित्यः स्यात्तदा शिष्यागमनानन्तरमध्यापनात् पूर्वमपि शब्द उपलभ्येतेत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तो न हेतुः ।

पूर्वपक्षसूत्रम् ।

अध्यापनादप्रतिषेधः ॥ २७ ॥

मदीयहेतोः प्रतिषेधो न युक्तः अध्यापनात् यद्यन्तरालकाले शब्दो न स्यात् कथमध्यापनं घटेत अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः आचार्य्यास्तु सूत्रद्वयमेवं व्याचक्षते विभक्तिव्यत्यासाद्धेतोस्तदन्तरालानुपलब्धिरर्थस्तथा च हेतोः स्वत्वस्याभावात् तदन्तरालस्य स्वत्वध्वंसस्यानुपलब्धिरतो न दानमित्यर्थः प्रतिषेधो न युक्तः नहि दानं ममाभिप्रेतं किं त्वध्यापनं तच्च विद्यमानस्य शब्दस्यैवेति भावः ।

सिद्धान्तसूत्रम् ।

उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥ २८ ॥

अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद्यः प्रतिषेधः स न संभवति । उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चरणानुकूलोच्चारणं वा तच्च स्थैर्यास्थैर्य्यपक्षयोस्तुल्यं न शब्दनित्यतायाः सहायकम् विधातुमलम् न दानं ह्यध्यापनं येन स्वस्वत्वध्वंसपरस्वत्वापादनार्थं स्थैर्य्यमाशङ्कनीयम् न वा संभवति बहूनामेकदा स्वत्वविरोधात् परस्वत्वदानासंभवाच्च अपि तु नृत्याध्यापनादाविवोपदेशमात्रमिति भावः ॥

पूर्वपक्षसूत्रम् ॥

अभ्यासात् ॥ २९ ॥

यद्धि स्थिरं तदभ्यस्यमानं दृष्टम् यथा दशकृत्वो रूपं पश्यति एवं शतकृत्वो ऽनुवाकमधीत इत्यभ्यासात् स्थैर्यं शब्दस्येति भावः ॥

उत्तरयति ॥

नान्यत्वे ऽप्यभ्यासस्योपचारात् ॥ ३० ॥

पूर्वपक्षो न युक्तः कुतः अन्यत्वे भेदे ऽपि शब्दानाम् । अध्यापनाभ्यासस्य उपचारात् सम्भवात्। नत्वभ्यासतः स्थैर्यं साधयति द्विर्जुहोति त्रिर्नृत्यतीत्यादौ भेदे ऽप्यभ्यासदर्शनादिति भावः ॥

अन्यतैव जगति नास्तीति कथमन्यत्वे ऽप्यभ्यासोपपत्तिरिति तटस्थ आशङ्कते ॥

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥ ३१ ॥

यद्वस्त्वन्यस्मादन्यदुच्यते तत् स्वस्मादनन्यद् अभिन्नम् तत कथमन्यद् भेदाभेदयोर्विरोधादिति भावः । स्वाभेदस्यावश्यकत्वमिति हृदयम् ।

समाधत्ते ॥

तदभावेनास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३२ ॥

तदभावे ऽन्यत्वस्याभावे ऽन्यतापि नास्ति तयोर्भेदाभेदयोः सिद्धेः परस्परसापेक्षत्वात वस्तुतस्तु तयोर्मध्ये इतरस्य एकतरस्य अनन्यत्वस्येतरापेक्षसिद्धेः इतरत्वस्य ज्ञानापेक्षा सिद्धिर्यस्य तादृशत्वादित्यर्थः ॥

शङ्कते ।

विनाशकारणानुपलब्धेः ॥ ३३ ॥

शब्दो नित्य इत्यादिः अनुपलब्धिरप्रत्यक्षमज्ञानं वा आद्ये प्रतिबन्दिमाह ॥

**अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥**

यद्यप्रत्यक्षत्वादभावसिद्धिस्तदा अश्रवणकारणस्याप्रत्यक्ष-त्वादश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥

द्वितीये त्वाह ॥

**उपलभ्यमाने चानुपलब्धेरसत्त्वादनुपदेशः ॥ ३५ ॥**

अनुमानादिना उपलभ्यमाने विनाशकारणे अनुपल-ब्धेरभावात् त्वदीयो हेतुरनपदेशः असाधकः असिद्धत्वात् अन्यभावत्वेन विनाशकल्पनमिति भावः ॥

सिद्धान्तिनः सूत्रान्तरम् ॥

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥**

शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात् संयोगाच्छब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानु-लब्धिरिति यथाश्रुतानुयायिनः । परे तु पाणिरूपनिमित्तस्य प्रश्लेषः सम्बन्धो यत्र स पाणिजः शब्दः अर्थात् उत्तरशब्दः ततः शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थः इत्याहुः अन्ये तु पूर्वसूत्रे शब्दस्य तावद्वेगात्मकः संस्कार-विशेषो हेतुस्तस्य तीव्रतीव्रतरमन्दमन्दतरत्वाच्छब्दो ऽपि तादृशः तत्र चोत्तरशब्दानां पूर्वशब्दनाशकत्वम् कल्प्यत इत्यर्थः ननु तादृशसंस्कार एव नास्तीत्यत्राह पाणीति नानुपलब्धिः संस्कारस्येति शेषः पाणेर्निमित्तस्य प्रश्लेषात् घण्टादिसंयोगात् संस्काररूपकारणाभावद्वारा शब्दाभावे शब्दानुत्पत्तौ नानुपलम्भः संस्कारस्येत्यर्थ इत्याहुः ॥

ननु घण्टादिपाणिसंयोगस्य शब्दनिर्वर्तकत्वे घण्टाद्या-श्रय एव शब्दः स्यादित्याशङ्कायामाह ॥

अस्पर्शत्वादप्रतिषेधः ॥ ३७ ॥

उक्तः प्रतिषेधो न संभवति अस्पर्शत्वात् शब्दाश्रयस्येति शेषः शब्दो हि न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्य्यत्वादित्याशयः ॥

एतदेव व्युत्पादयितुमाह ॥

विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३८ ॥

समासे स्पर्शादिसमुदाये साहित्येन शब्दो वर्त्तत इति न युक्तम् विभक्त्यन्तरस्य विभागान्तरस्य तारमन्दादेरुपपत्तेः अयमर्थः एकस्मिन्नेव शंखादौ तारमन्दादिनानाशब्दा जायन्ते गन्धादयस्तु विनाग्निसंयोगम् न परावर्त्तन्त इति भावः। समाप्तं शब्दानित्यत्वप्रकरणम् ॥

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं दर्शयति ॥

विकारादेशोपदेशात् संशयः ॥ ३९ ॥

विकारोपदेशादादेशोपदेशाच्च संशयः इको यणचीत्यादिना इकारादेर्विकारो यकारादिरिति (१)सांख्या व्याचक्षते परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशं समादिशन्ति अतश्च वर्णा विकारिणो न वेति संशयः विकारश्च स्वरूपस्य विनाशे ऽविनाशे वा द्रव्यान्तरारम्भकत्वं यथा दुग्धादेर्दध्याद्यारम्भकत्वं बीजादेर्वृक्षाद्यारम्भकत्वं च सुवर्णादेरपि लोहाभिघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलाद्यारम्भकत्वं कपालादेश्च स्वरूपविनाशेन घटाद्यारम्भकत्वम् ॥

तत्र विकारनिरकरणाय सूत्रम् ॥

प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४० ॥

न वर्णा विकारिणस्तथा सति तत्प्रकृतेरुपादानत्वाभिमतस्य विवृद्ध्या विकारस्यापि विवृद्ध्यापत्तेः महदल्पावय-

(१) "सार्वा" इति मु० पु० पाठः।

वारब्धावयविनो महदल्पत्ववत् ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकाराऽऽरब्धयकारस्य विवृद्धिः स्यादित्यर्थः तस्मादादेशपक्षः श्रेयानिति भावः ॥

आक्षिपति ॥

न्यूनसमाधिकोपपत्तेर्विकाराणामहेतुः ॥ ४१ ॥

उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपपत्तेः दर्शनात् यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः यथा वा न्यग्रोधबीजादुत्कृष्टेन नारीकेलीबीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जन्यते कनकादिसमपरिमाणं कटकादि यथा वा न्यूनाधिकनारिकेलीबीजाभ्यां समौ वृक्षौ न्यूनपरिमाणाद् वटबीजाच्च महान् वटतरुरिति ॥

समाधत्ते ॥

नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४२ ॥

नोक्तं समाधानं युक्तम् अतुल्यप्रकृतीनां भिन्नप्रकृतीनां हि विकाराणां विकल्पो वैलक्षण्यं मया अभिहितं नहि बीजादेर्ह्रासवृद्ध्यादिना वृक्षादेर्ह्रासवृद्ध्यादिकं प्रक्रान्तं त्वदुक्तवैलक्षण्यन्तु तत्राप्यस्ति तथा च त्वदुक्तमुपचारच्छलम् इतिभावः।

शङ्कते ।

द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ॥ ४३ ॥

द्रव्यत्वेन न्यग्रोधादिप्रकृतीनां तुल्यत्वे ऽपि विकारवैषम्यं यथा एवमेव वर्णत्वेन तुल्ययोरपि ह्रस्वदीर्घयोर्विकारयोर्योविकारो यकारस्तस्य विकल्पऐकरूप्यं नानुपपन्नमित्यर्थः ।

समाधत्ते ।

न विकारधर्मानुपपत्तेः ॥ ४४ ॥

नात्र द्रव्यविकारतुल्यता विकाराणां हि अयं धर्मो यत्

प्रकृत्यनुविधानं तद्भेदे भेद इति प्रकृते च तदनुपपत्तेः ह्रस्वदीर्घत्वादिना प्रकृतिभेदे ऽपि कार्य्यभेदाभावात् ।

इतश्च न विकार इत्याह ।

विकारप्राप्तानामपुनरावृत्तेः ॥ ४५ ॥

विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा न खलु दधि क्षीरतां पुनरापद्यते इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यत दध्यत्रेत्युक्त्वा पुनरपि दधि अत्रेत्युच्यते एवेति भावः ।

आक्षिपति ।

सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४६ ॥

उक्तो हेतुर्न युक्तः सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ।

निराकरोति ।

न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४७ ॥

सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता न तु कटकत्वादिना तत्रोभयमपि सुवर्णभावं न जहाति यदि हि सुवर्णतामपहाय कटतामापन्नं पुनः सुवर्णता तदा व्यभिचारः शङ्क्येत न चैवं प्रकृते विकारतां हित्वा यकारतां प्राप्तस्य। योकारतापत्तिरस्त्येवेति दोषो दुष्परिहर इति भावः ।

अविकारे मूलयुक्तिमाह ।

नित्यत्वे ऽविकारादनित्यत्वे चानवस्थानात् ॥ ४८ ॥

वर्णानां नित्यत्वे विकारासंभवादनित्यत्वे चास्थिरत्वात्त्वेनेकारोत्पत्त्यनन्तरमिकारनाशाद्विकारानुपपत्तिरित्यर्थः

अत्र जातिवादी नित्यत्वमतमालम्ब्य परिहरति ।

नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ४९ ॥

विकाराणां प्रतिषेधो न युक्तः नित्यानां धर्मविकल्पाद् धर्मस्य नानाविधत्वादतीन्द्रियत्वात चकारैणेन्द्रियकत्वं समुच्चीयते यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वम् ऐन्द्रियत्वे ऽपि गोत्वादीनां नित्यत्वमेवमन्येषां नित्यानामविकारित्वे ऽपि वर्णानां विकारित्वं स्यादिति ।

अनित्यत्वमालम्ब्य स आह ।

अनवस्थायित्वे च वर्णोलब्धिवत्तदुपपत्तिः ॥ ५० ॥

अनवस्थायित्वे ऽपि वर्णानां यथा प्रत्यक्षं भवत्येवं विकारो ऽपि स्यादिति भावः ।

उभयत्रोत्तरयति ॥

विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५१ ॥

उक्तः प्रतिषेधो न युक्तः विकारधर्मित्वे नित्यत्वाभावात् विकारो ह्यत्र स्वरूपपरित्यागेन रूपान्तरापत्तिः तथात्वे च नित्यत्वविरोधात् नहि घटादेः कपालाद्युपादेयत्ववत् प्रकृते संभवति यकारकाले इकारानुपलब्धेः अनित्यत्वपक्षे ऽपि प्रतिषेधो न युक्तः प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते विकारस्तु कालान्तरीयो न युज्यते दधीतिशब्दानन्तरमत्रे-त्यादिशब्देन तस्य नाशादिति भावः ।

इतश्च विकारानुपपत्तिरित्याह ।

प्रकृत्यनियमात् ॥ ५२ ॥

विकाराणां हि प्रकृतिनियमो यथा क्षीरदध्नोः प्रकृतिविकारभावो न तु वैपरीत्यं प्रकृते तु दध्यत्रेत्यादाविकारो

यकारप्रकृतिर्विध्यतोऽस्यादौ तु यकार इकारप्रकृतिरिति भावः ।

अत्र छलवादी शङ्कते ।

अनियमे नियमान्नानियमः ॥ ५३ ॥

अनियमो य उक्तः स न युक्तः कुतः अनियतत्वस्य नियमादित्यर्थः ।

समाधत्ते ।

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५४ ॥

अनियमे नियमाद्यस्त्वया नियमप्रतिषेधः कृतः स न युक्तः नियमानियमयोर्विरोधात् अनियमो हि नियमाभावस्तस्मिन् सति नियमासंभवादिति भावः ।

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति ।

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु वर्णविकारः ॥ ५५ ॥

तुशब्दः पुनरर्थे एतेभ्यः पुनर्वर्णविकारोपपत्तेर्वर्णविकारस्य एकवर्णाप्रयोगेण वर्णान्तरप्रयोगस्य उपपत्तेर्वर्णविकार इति व्यवह्रियते तानेवाह गुणान्तरेति गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः यथोदात्ते ऽनुदात्तत्वम् उपमर्दो धर्मिनिवृत्तौ धर्मान्तरप्रयोगः यथास्तेर्भूः ह्रासो दीर्घस्य ह्रस्वत्वं वृद्धिरथात् ह्रस्वस्य दीर्घत्वं लेशः अल्पत्वं यथास्तेरकारलोपः श्लेषः आगमः एतैः कारणैर्विकारव्यवहार इति समाप्तं शब्दपरिणामप्रकरणम् ।

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात् तद्व्युत्पादनाय पदार्थं निरूपणीये पदादौ निरूपयति ॥

ते विभक्त्यन्ताः पदम् ॥ ५६ ॥

ते वर्णा विभक्त्यन्ताः पदं बहुत्वमविवक्षितं विभक्तेश्च सत्त्वमनपेक्षितं विभक्तिः सुप्तिङ्‌रूपा वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि किं त्विदमाकाङ्क्षास्वरूपम् अथ वा विभक्तिर्वृत्तिरन्तःसंबन्धस्तेन वृत्तिमत्वं पदत्वम् इत्थं च पदं निरूप्य तदर्थनिरूपणं संगच्छते यत्तु प्रसङ्गात् पदार्थनिरूपणमिति तन्न पदनिरूपणस्यासंगतत्वापत्तौ एकसूत्रस्य प्रकरणत्वाभावात् तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वन्निरूपितं तत्रापि धात्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह ।

तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥ ५७ ॥

व्यक्तिर्गवादिः जातिर्गोत्वादिराकृतिरवयवसंस्थानविशेषस्तेषां सन्निधिः सामीप्यं मिलनं तत्र सति उपचारात् ज्ञानात् तथा च त्रयाणां युगपत् प्रत्ययात् किमेतेषां प्रत्येकं पदार्थ उत समस्तमिति संशय इत्यर्थः इदं भाष्यमिति केचित् वस्तुतस्तत्त्वबोधादिस्वरसात् सूत्रमेव तदर्थ इत्यंशस्तु भाष्यकृतः पूरणमिति प्रति भाति ।

तत्र व्यक्तिवादिनो मत आह ॥

या शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ॥ ५८ ॥

पदार्थ इति शेषः उक्तानामुपचारात् व्यवहारात् अनुबन्धः प्रजननं या गौर्गच्छतीत्यादिव्यवहारो व्यक्तावेव जात्याकृत्योरमूर्त्तत्वात् एवं गवां समूहः गां ददाति गां प्रतिगृह्णाति दश गावः गौर्वर्द्धते कृष्णा गौः कपिला गौः रोहितं गौः

प्रसूत इत्यादिव्यवहाराणां व्यक्तावेव सम्भवात् समासः । सम्यगासनं सम्बन्धो वेत्यर्थं गौरास्ते गोमुखमित्युदाहरणीयम् ।

तद् दूषयति ।

**तदनवस्थानात् ॥ ५९ ॥**

न व्यक्तौ शक्तिः व्यक्तिमात्रस्यानवस्थानात् अव्यवस्थानात् व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद्यत्किञ्चिद्द्रव्यक्तेरुपस्थितिः स्यादिति गोत्वविशिष्टा व्यक्तिर्वाच्या तथा च नागृहीतविशेषणान्यायात् जातावेव शक्तिरस्तु । कथं तर्हि व्यक्तिबोध इत्यतो ऽग्रिमसूत्रम् ॥

**सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावे ऽपि तदुपचारः ॥ ६० ॥**

अतद्भावे ऽपि तत्पदाशक्यत्वे ऽपि तदुपचारस्तच्छब्दव्यपदेशो यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः सहचरणात् संयोगविशेषाद्यष्टिं भोजयेत्यत्र यष्टिशब्दप्रयोगः एवं स्थानान्मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे तादर्थ्यात् कटं करोतीति कटार्थकवीरणे कटस्यासिद्धत्वेन कारकत्वायोगात् यमस्य वृत्तादनुशासनादितो राजनि यम इति मानात् आढकेन मिताः सक्तव आढकसक्तव इति धारणात् तुलया धृतं चन्दनम् तुलाचन्दनमिति सामीप्याद्गङ्गायां गावश्चरन्तीति कृष्णद्रव्ययोगात् कृष्णः शाटक इति शकटेति पाठे कृष्णः शकट इत्युदाहरणीयम् प्राणसाधनादन्नम् प्राणा इति आधिपत्याद्राजैवास्य कुलमिति कुलाधिपतिः प्रतीयते तथा च यथा गङ्गादिपदात् गङ्गातीरत्वा-

दिना बोधस्तथा गोपदादितो गोत्वविशिष्टस्य लक्षणया बोधः एतेन युगपद्वृत्तिद्वयविरोधः एकपदार्थयोः परस्पराननन्वयश्च प्रत्युक्तः गोत्वत्वेन रूपेण शक्तिग्रहात् तथैवोपस्थितिरतो निष्प्रकारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ।

आकृतिरेव शक्येति मतमुपन्यस्यति ।

**आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥६१॥**

आकृतिः पदार्थः कुतः सत्त्वस्य प्राणिनो गवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेस्तदपेक्षत्वाद् अयमश्वो गौरयमित्यादिव्यवहारस्याकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ।

फलतस्तद्दूषयति ।

**व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६२ ॥**

मृद्गवके व्यक्त्याकृतियुक्ते अपि प्रोक्षणादीनामप्रसङ्गादप्रसञ्जनाज्जातिः पदार्थ इतरथा मृद्गवकस्यापि व्यक्तित्वाद्गवाकृतिसत्वाच्च वैधं प्रोक्षणादिकं स्यादिति भावः ।

केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिशक्तिपक्षं निराकरोति ।

**नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६३ ॥**

न जातिमात्रं पदार्थः जात्यभिव्यक्तेर्जातिशाब्दबोधस्य आकृतिव्यक्त्यपेक्षत्वादाकृतिव्यक्तिविषयकत्वनियमात् । तयोरपि वाच्यत्वमावश्यकम् शक्तिं विना तद्भानासम्भवात् न च गोत्वप्रकारकतादृशाकृतिविशिष्टशाब्दत्वस्य कार्य्यतावच्छेदकत्वात् तद्भानमिति वाच्यम् तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गस्तस्मात् पदस्

स्ववाच्यमेवोपस्थापयति इत्यम् च त्रयाणामपि वाच्यत्वं सिद्धमित्याह ।

(१)जात्याकृतिव्यक्तयस्तु पदार्थः ॥ ६४ ॥

तुशब्द एकैकमात्रपदार्थत्वव्यवच्छेदाय पदार्थ इत्येकवचनं तु तिसृष्वप्येकैवशक्तिरिति सूचनाय विभिन्नशक्तौ कदाचित् कस्याश्चिदुपस्थितिः स्यात् शक्तेस्तुल्यत्वे ऽपि व्यक्तेर्विशेष्यत्वात् प्राधान्यम् तथैव शक्तिग्रहात् न चाकृत्यादिसाधारणशक्यतावच्छेदकाभावान्न शक्यैक्यमिति वाच्यम् तथा नियमे मानाभावात् । इदं गवादिपदमभिप्रेत्य तेन पश्वादिपदस्य जात्यवाचकत्वे ऽपि न क्षतिः जातिपदं वा धर्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वात् ॥

तत्र के व्यक्त्यादय इत्याकाङ्क्षायामाह ।

व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६५ ॥

यद्यपि जात्यादेरपि व्यक्तित्वात् प्रमेयत्वमेव व्यक्तित्वं तथापि जात्याकृतिशक्तिविषयव्यक्तेरिदं लक्षणं तथा च गुणविशेषो जात्याकृतिसमानाधिकरणो गुणः संख्यादिभिन्नस्तदाश्रयो मूर्तिर्व्यक्तिरिति समानार्थकमित्यर्थः परे तु गुणा रूपादयः विशेषा विशेषका उत्क्षेपणादयः तेषामाश्रयो द्रव्यं तेन जात्याश्रयो व्यक्तिरित्याशयः विशेषलक्षणमाह मूर्त्तिरिति मूर्त्तिः संस्थानविशेषः तद्वान् इत्याहुः । अत्र च मध्यमपदलोपी समास इत्याशयः । अन्ये तु व्यक्तेर्लक्षणम् मूर्तिरिति सैव केत्याह गुणविशेषाश्रय इति गुणविशेषस्यावच्छिन्नपरिमाणस्याश्रय इत्यर्थः इत्याहुः ।

आकृतिं लक्षयति ।

**आकृतिर्जातिलिङ्गाख्या ॥ ६६ ॥**

जातिलिङ्गमित्याख्या यस्या जातेर्गोत्वादेर्हि सास्नादिसंस्थानविशेषो लिङ्गं तस्य च परंपरया द्रव्यवृत्तित्वं जातिर्द्रव्यासमवायिकारणतावच्छेदिका लिङ्गं धर्मो यस्याः सेत्यर्थः इति कश्चित् ।

जातिं लक्षयति ।

**समानप्रसवात्मिका जातिः ॥ ६७ ॥**

समानः समानाकारकः प्रसवो बुद्धिजननम् आत्मा स्वरूपं यस्याः सा तथा । तथा च समानाकारबुद्धिजननयोग्यत्वमर्थः समानाकारबुद्धिजननयोग्यधर्मविशेषो नित्यानेकसमवेतरूपो ऽर्थ इत्यर्थ इत्यपि वदन्ति इदं तु बोध्यम् । एवं सत्याकृत्यविषयको गवादिपदान्न शाब्दबोधः अनुभवबलेन तथैव कार्यकारणभावकल्पनादन्यथा लाघवाद्गोत्वविशिष्टे शक्तिरेव स्यादिति । समाप्तं शब्दशक्तिपरीक्षाप्रकरणम् ॥

द्वितीयाध्यायस्य द्वितीयमाह्निकं च विभागपरीक्षाद्वारकं साङ्गप्रमाणपरीक्षणं नाम । अत्राध्याये प्र० आ० सूत्रसंख्या मु० वृ० पु० नुसारेण ६७ आ० पु० नुसारेण ६८ मु० भा० सारेण ६८ द्वि० आ० च० मु० वृ० पु० ७१ आ० पु० ६७ मु० भा० ६६ । समष्ट्या मु० वृ० सारेण १३८ । आ० पु० सा० १३६ भा० १३४ । विशेषविचारश्च सर्वान्ते करिष्यते ।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ द्वितीया-

## तृतीयो ऽध्यायः ।

——:o:——

अजप्रभृतितुल्यता भवति यत्कृपामन्तरा
यदीयकरुणाकणात् तरतिमोहजालं नरः ।
विधाय हृदयाम्बुजे रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम् ॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादि-प्रमेयषट्कं तृतीये परीक्षणीयं तेनात्मादिषट्कपरीक्षैवाध्या-यार्थः । तत्रात्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः तत्र च न-व प्रकरणानि तत्रादाविन्द्रियभेदप्रकरणं तत्रेन्द्रियं ज्ञानवन्न-वेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात् तथा चात्मशब्दस्य नानार्थत्वादिन्द्रियाणामभौ-तिकत्वाद्वा न चाक्षुर्यमितीन्द्रियचैतन्यवादिनस्तन्निराकर-णाय सूत्रम् ।

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥**

एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् दर्शनस्पर्शने ज्ञानविशेषौ । तृतीया च प्रकारे तेन चाक्षुषस्पार्शनोभयव-त्त्वेनैकस्य धर्मिणः प्रतिसन्धानादित्यर्थः। तथा च यो ऽहं घ-टमद्राक्षं सो ऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति ।

अत्र शङ्कते ।

**न विषयव्यवस्थानात् ॥ २ ॥**

चक्षुस्त्वगादीनां रूपस्पर्शादिवन्नियतविषयत्वात् चक्षु-

रादेश्चाक्षुषादिसमवायित्वम् इत्थं चाभेदप्रत्ययो भ्रान्त इति भावः ।

समाधत्ते ।

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

उक्तप्रतिषेधो न युक्तः उक्तविषयव्यवस्थानादेवात्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः । अयं भावः तत्तदिन्द्रियाणां तत्तद्विषयकप्रत्यक्षं प्रति समवायित्वं वाच्यम् न तु प्रत्यक्षत्वावच्छिन्नं प्रति अनुमित्यादिजनकत्वे तु विनिगमकाभावः । तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वं चक्षुरादेरनित्यत्वादात्मनश्च नित्यताया वक्ष्यमाणत्वाच् चक्षुरादिविनाशे ऽपि स्मरणाच् चक्षुरहमित्याद्यप्रतीतेश्चनेन्द्रियात्मवादो युज्यत इति ॥

समाप्तमिन्द्रियभेदप्रकरणम् ।

ननु गौरो ऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति ।

शरीरदाहे पातकाभावात् ॥ ४ ॥

पातकाभावात् पातकादेरभावप्रसङ्गात् तथा चोत्तरकालिकं दुःखादिकं न स्यादिति यद्वा दाहो नाशः तथा च शरीरनाशे कृते कर्तरि शरीरे विनष्टे पातकं नस्यादित्यर्थः । यद्यपि भूतचैतन्यवादिनां पातकादिकं नोपपद्यते तथापि तस्य प्रमाण्याङ्गकत्वादेकदेशिनः पूर्वपक्षित्वाद्वा न दोष इति भावः ।

तथापि तुल्यो दोष इत्याशङ्कते ।

तदभावः सात्मकप्रदाहे ऽपि तन्नित्यत्वात् ॥ ५ ॥

तदभावः पातकाभावः सात्मकशरीरस्य प्रदाहे ऽपि

प्रसक्तः तन्नित्यत्वात् तस्य आत्मनो नित्यत्वेन निर्विकारत्वं तेन जन्यधर्मानाश्रयत्वमभिमतम् इति केचित्। तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित् किं च सात्मकशरीरनाशे ऽपि हन्तुः पातकाभावः स्यात् तस्यात्मनो नित्यत्वेन तन्नाशकत्वाभावात्।

परिहरति।

न कार्य्याश्रयकर्तृबधात् ॥ ६ ॥

कार्य्याश्रयस्य चेष्टाश्रयस्य कर्तुः कृत्यवच्छेदकस्य शरीरस्यैव नाशो न त्वात्मन इति न पातकाभावः यद्वा न हन्तुः पातकाभावः कार्य्याश्रयकर्तृबधात् शरीरस्य नाशात् ब्राह्मणत्वादेः शरीरवृत्तित्वात् तन्नाशादेव पापोत्पत्तिरिति भावः। वस्तुतस्त्वपूर्वशरीरावच्छिन्नप्राणसंयोगात्मकोत्पत्तिवत् शरीरावच्छिन्नप्राणसंयोगध्वंसविशेषात्मकमरणमप्यात्मनः संभवति अन्यथा शरीराविनाशिनो बन्धनमुखनिरोधादेर्हिंसात्वं न स्यात् पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनं तु वक्ष्यमाणयुक्तिभिरिति ध्येयम्।
समाप्तं देहभेदप्रकरणम्।

प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते ॥

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् स्थिरात्मसिद्धिरिति केषांचिन्मतं तन्निराकरणाय चेतदुपन्यासः।

नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥

मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययो भ्रम इत्यर्थः ।

आक्षिपति ।

एकनाशे द्वितीयाविनाशात् ॥ ९ ॥

चक्षुरैक्ये एकचक्षुर्नाशे ऽन्धत्वं स्यादिति भावः ।

अत्रैकदेशी परिहरति ।

अवयवनाशे ऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

अवयवस्य शाखादेर्नाशे ऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानात् नावयवनाशे सर्वत्रावयविनाशनियमस्तथैवैकनाशे ऽपि नान्धत्वमिति ।

एकदेशिमतस्य पूर्वोक्ताक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम् ।

दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

उक्तः प्रतिषेधो न युक्तः दृष्टान्तस्य विरोधात् अयुक्तत्वात् नहि शाखाच्छेदे वृक्षस्तिष्ठति तथा सति वृक्षस्यानाशप्रसङ्गात् अतो ऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम् एतेनैकनाशे द्वितीयाविनाशाद्भेदसाधनमपि प्रत्युक्तं चक्षुर्नाशे ऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुःसंभवात् इत्थं च लाघवाच्चक्षुरद्वैतमिति टीकास्वरससिद्धम् परे तु चक्षुरद्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः सूत्रं सव्येति । शङ्कते नैकस्मिन्निति । समाधत्ते एकेति । शङ्कते अवयवेति । निराकरोति दृष्टान्तेति । शाखानाशे वृक्षनाशावश्यकत्वात् दृष्टान्तो न युक्तः यद्वा दृष्टान्तस्य गोलकभेदस्य

ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते ॥

नात्मप्रतिपत्तिहेतूनां मनसि संभवात् ॥ १६ ॥

नातिरिक्त आत्मा साधकमानानां मनसार्थान्तरमिति भावः ।

समाधत्ते ।

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥

यदि मनसो ज्ञातृत्वं तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यम् तथाचैको ज्ञाता ज्ञानसाधनं चैकं सिद्धं मन आत्मा ऽस्त्विति संज्ञामात्रं किं च व्यासङ्गोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः ।

ननु रूपादिप्रत्यक्षं सकरणकमस्तु न तु सुखादिप्रत्यक्षम् । एवं परमाण्वन्तरस्यातीन्द्रियत्वे ऽपि मनसः प्रत्यक्षम् स्यादत्राह ॥

नियमश्च निरनुमानः ॥ १८ ॥

उक्तो नियमविशेषो निरनुमानः निष्प्रमाणको गौरवाद्वैपरीत्ये विनिगमकाभावाच्चेति भावः । समाप्तं मनोभेदप्रकरणम् । एवं साधिते ऽपि देहादिभिन्ने आत्मनि विना तन्नित्यतां न लोकार्थिनः प्रवृत्तिरत आत्मनित्यताप्रतिपादनाय सूत्रम् ।

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ॥ १९ ॥

जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां संप्रतिपत्तिः उत्पत्तिस्तस्याः पूर्वपूर्वानुभवाधीनस्मृतिसम्बन्धादेव संभवात् । इत्थं चेदानीन्तनस्यात्मनः

पूर्वपूर्वसिद्धौ तस्यानादित्वमनादेश्च न नाश इति नित्यत्वसिद्धिरिति भावः ।

अत्र शङ्कते ।

**पद्मादिषु प्रबोधमीलनवत् तद्विकारः ॥ २० ॥**

बालस्य हर्षादयो मुखविकासाद्यनुमेयाः न च तत्संभवः पद्मादीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ।

सिद्धान्तसूत्रम् ।

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥**

उक्तं न युक्तं यतः पञ्चात्मकानां पाञ्चभौतिकानां ये विकारास्तेषाम् उष्मकालादिनिमित्तत्वात् मनुष्यादीनां तु हर्षादिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः ।

आत्मनित्यत्वे हेत्वन्तरमाह ।

**प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥**

प्रेत्य मृत्वा जातमात्रस्य यः स्तन्याभिलाषः स तावदाहाराभ्यासजनितः जन्मान्तरीयेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालः स्तनपाने प्रवर्तत इत्यनादित्वमिति ।

शङ्कते ।

**अयसो ऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥ २३ ॥**

यथा ऽयस्कान्तसन्निहितस्यायसो ऽयस्कान्ताभिमुखतथागमनं तथैव वत्सस्यापि स्तनोपसर्पणं नत्विष्टसाधनत्वज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ।

नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

स्तनपाने एव बालः प्रवर्तते न त्वन्यत्रेति नियमः कथं स्यात्। वस्तुतस्तु अन्यत्रापि प्रवृत्त्यभावात् प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं न तु क्रियामात्रमतो न व्यभिचार इति भावः।

हेत्वन्तरमाह।

वीतरागजन्मादर्शनात् ॥ २५ ॥

वीतरागो रागशून्यस्तावन् नोत्पद्यते अपि तु सरागस्तत्र जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः सम्प्रति तु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम्।

सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ २६ ॥

द्रव्यस्य घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिर्यथा घटादिः स्वत एव रूपादिमान् भवति तथैवात्मा अपि स्वत एव वीतरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः समाधत्ते।

न संकल्पनिमित्तत्वाद् रागादीनाम् ॥ २७ ॥

संकल्पो ज्ञानमिष्टसाधनताज्ञानं तन्निमित्तका हि रागादयस्तथा चेष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्य्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावान्नाप्रयोजकत्वमिति भावः। समाप्तमनादिनिधनप्रकरणम्।

* क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिकमित्येके।

तत्र सिद्धान्तसूत्रम् ।

शरीरं पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

मानुषादिशरीरं पार्थिवं पृथिवीसमवायिकारणकं गुणान्तरस्य गन्धनीलादिरूपकाठिन्यादेरुपलब्धेरिति ।

मतान्तराभिधानाय त्रिसूत्री ।

पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २९ ॥

निश्वासोच्छासोपलब्धेश्चातुर्भौतिकम् ॥ ३० ॥

गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥ ३१ ॥

तद्गुणानां पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानामुपलब्धेः एतावता त्रैभौतिकत्वे सिद्धे निःश्वासादितश्चातुर्भौतिकत्वं निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ क्लेदो जलविशेषो जलविशिष्टपृथिवी वेत्युभयथा ऽपि जलमावश्यकं पाकस्य तेजःसंयोगाधीनत्वात् तेजःसिद्धिः व्यूहो निःश्वासादिः अवकाशदानं छिद्रम् एतानि(१)सूत्रकृता तुच्छत्वान्न दूषितानि तथाहि एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः संकरापत्तेरसंभवात् न वा नानोपादानकत्वं विजातीयानामनारम्भकत्वात् । तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात् न वा चित्रद्रव्यम् गन्धवत्त्वविरोधात् गन्धादीनामानाश्रमनपायाच्च पार्थिवत्वमित्युक्तप्रायं यद्वा पार्थिवत्वे कथं जलादिसंबन्ध इत्याशङ्कायां जलादिनिमित्तवशात्त्रैभौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री ।

भिधानादेव प्रकृतौ विकारस्य लयाभिधाने सूर्यं ते चक्षुर्गच्छतादिति मन्त्रान्ते पृथिव्यां ते शरीरमिति इमां च चतुःसूत्रीं के चन भाष्यतया वर्णयन्ति तन्न तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्तेः अत एव चतुर्थं सूत्रमेवेत्यपरे अन्ये तूक्तयैवानुपपत्त्या आप्यतैजसवायव्यानि लोकान्तरशरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति भाष्यं सूत्रतया वर्णयन्ति । तदर्थस्तु आप्यादीनि लोकान्तरेषु वरुणलोकादिषु प्रसिद्धानि शरीराणि जलादिरूपत्वेन कथमुपभोगक्षमतेत्यत्र तेष्वपीति भूतसंयोगः पृथिव्युपष्टम्भः पुरुषार्थतन्त्र उपभोगसंपादकः । समाप्तं शरीरपरीक्षाप्रकरणम् ।

अथेन्द्रियं परीक्षणीयं तत्र लक्षणसूत्रोक्तम् भौतिकत्वमिन्द्रियाणां परीक्षितुं संशयमाह ।

कृष्णसारे सत्युपलम्भात् व्यतिरिच्य चोपलम्भात् संशयः ॥ ३३ ॥

कृष्णसारे चक्षुर्गोलके सति घटाद्युपलम्भात् गोलकरूपेन्द्रियत्वमिति बौद्धा व्यतिरिच्य विषयं प्राप्य उपलम्भात् उपलम्भजननाद्गोलकातिरिक्तानीत्यपरे तत्र इन्द्रियाणि गोलकातिरिक्तानि न वेति संशये गोलकातिरिक्तानीति नैयायिकादयः तत्राप्यभौतिकान्याहंकारिकाणीति सांख्याः भौतिकानीत्यपरे ।

तत्र सांख्यमतेन बौद्धमतमुदस्यन्नाह ।

महदग्रहणात् ॥ ३४ ॥

गोलकं नेन्द्रियम् अप्राप्य कारित्वे ऽतिप्रसङ्गाद् इत्थं च गोलकातिरिक्तं भौतिकमिति वाच्यं तदप्यसङ्गतं च-

या हि न्यूनपरिमाणं महत् परिमाणं च गृह्यते न च न्यूनेन हतो व्यापनं सम्भवति । न बाऽव्याप्यग्रहणमतो भौतिकान्द्रियाण्याहङ्कारिकाणीति अत्र च अभौतिकानीन्द्रियाणीत्यवतारभाष्यं सूत्रादौ केचिल्लिखन्ति ।

सांख्यं निरस्यति ।

रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३५ ॥

रश्मिर्गोलकावच्छिन्नं तेजः तेनार्थस्य घटादेर्यः संनिकर्षविशेषस्तस्मात् तयोर्महदण्वोर्ग्रहणमुपपद्यते भौतिकेऽपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टम् । अभौतिकत्वे तु पुरःपश्चाद्वर्तिनां सर्वेषामेव ग्रहणं स्यात् ।

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते ।

तदनुपलब्धेरहेतुः ॥ ३६ ॥

रश्म्यर्थसन्निकर्षो न हेतुर्गोलकातिरिक्तस्य रश्मेरनुपलब्धेः ।

समाधत्ते ।

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३७॥

रूपोपलब्धेः सकरणकत्वादिना अनुमीयमानस्य प्रत्यक्षतो अनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ।

कथं तर्हि नोपलम्भ इत्यत आह ।

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३८ ॥

द्रव्यस्य धर्मभेदो महत्त्वादिर्गुणस्य धर्मभेद उद्भूतत्वं तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धेर्न नियमः यत्रोद्भूतरूपमहत्त्वादिकं तस्य प्रत्यक्षं तदभावाच्चक्षुरादेरप्रत्यक्ष चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यं कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः अदृष्टविशेषाधीन इ

न्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति सूत्रमेवे-
दमिति केचित् ।

महतो रूपवतो ऽनुपलब्धौ दृष्टान्तमाह ।

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनु-
पलब्धिः ॥ ३९ ॥

महतो रूपवतश्चोल्काप्रकाशस्य सौरालोकेनाभिभवात्
मध्यन्दिने ऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषो ऽप्यनुपलम्भः
सम्भवतीति भावः नन्वेवं घटादावपि रश्मिः स्यात्सौरा-
लोकेनाभिभवात् पुनरग्रह इत्यत्राह ॥

न रात्रावप्यनुपलब्धेः ॥ ४० ॥

नेत्यस्य घटादौ रश्मिरिति शेषः ।

नन्वनुद्भूतरूपवत्त्वाच्चक्षुषो ऽनुपलब्धिर्न त्वभिभवादि-
त्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह ।

वाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभि-
व्यक्तितो ऽनुपलब्धिः ॥ ४१ ॥

अनभिव्यक्तितो ऽनुद्भूतरूपवत्त्वाच्चक्षुषो ऽनुपलब्धिः
कुतः वाह्यप्रकाशानुग्रहात् । सौरालोकादिसाहित्याद्विषयो-
पलब्धेः तस्योद्भूतरूपवत्त्वे वाह्यप्रकाशापेक्षा न स्यात् अभि-
भूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं स्यादभिभूतस्य
कार्य्याक्षमत्वादिति भावः ।

ननु चक्षुषो नाभिभवः किं तु तद्रूपस्य तस्य च प्रत्यक्षजन-
कत्वे मानाभावः किं चाभिभवात् तस्य न प्रत्यक्षमितरप्र-
त्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह ।

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यत इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयं तत्र संशयमाह ।

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥

स्थानान्यत्वे स्थानभेदे घटपटादीनां नानात्वदर्शनात् नानावयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ।

पूर्वपक्षसूत्रम् ।

त्वगव्यतिरेकात् ॥ ५२ ॥

सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात् त्वगेवैकमिन्द्रियमस्तु ।

उत्तरयति ।

न युगपदर्थानुपलब्धेः ॥ ५३ ॥

युगपत् एकदा अर्थानां गन्धरूपादीनाम् अनुपलब्धेर्न त्वगेवैकमिन्द्रियम् । अन्यथा तस्याव्यापकत्वाच्चाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ।

इन्द्रियाणां नानात्वे कार्य्यभेदमानमाह ।

इन्द्रियार्थपञ्चत्वात् ॥ ५४ ॥

इन्द्रियार्थानामिन्द्रियग्राह्याणां रूपादीनां पञ्चविधत्वात् रूपादीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यं तच्चैकेन्द्रियपक्षे न सम्भवति अन्धादीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ।

शङ्कते ।

न तदर्थबहुत्वात् ॥ ५५ ॥

इन्द्रियार्थानां नीलपीतादीनां बहुत्वादिन्द्रियाणां बहुतरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ।

दिवाभूता रात्रिः । अव्ययीभावस्य त्विष्यते । उपकुम्भीभूतम् । एतच्चाव्ययीभावश्चेति सूत्रे भाष्ये उक्तम् ॥

**क्यचि च । ७ । ४ । ३३ ॥**

अस्येत्स्यात् । पुत्रीयति । खट्वीयति ॥

**अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु । ७ । ४ । ३४ ॥**

क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति ॥

**न च्छन्दस्यपुत्रस्य । ७ । ४ । ३५ ॥**

पुत्रभिन्नस्यावर्णान्तस्य क्यचि ईत्वदीर्घौ न ॥ मित्रयुः संस्वेदयुः । देवान् जिगाति सुम्नयुः । क्याच्छन्दसीत्युः । अपुत्रस्य किम् । पुत्रीयन्तः सुदानवः ॥ अपुत्रादीनामिति वाच्यम् ॥ * ॥ जनीयन्तो न्वग्रवः । जनमिच्छन्त इत्यर्थः ॥

**दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति । ७ । ४ । ३६ ॥**

एते क्यचि निपात्यन्ते । भाषायां तु प्रत्ययाभावाद् दुष्टीयति । द्रविणीयति । वृषीयति । रिषीयति ॥

**अश्वाघस्यात् । ७ । ४ । ३७ ॥**

अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तो मघवन् ॥ मा त्वा वृका अघायवः । न च्छन्दसीति निषेधो न ईत्वमात्रस्य किन्तु दीर्घस्यापीत्यत्रेदमेव सूत्रं ज्ञापकम् ॥

**देवसुम्नयोर्यजुषि काठके । ७ । ४ । ३८ ॥**

अनयोः क्यचि आत्स्यात् यजुषि कठशाखायाम् । देवायन्तो यजमानाः । सुम्नायन्तो हवामहे । इह यजुःशब्दो न मन्त्रमात्र-

परः । किन्तु वेदोपलक्षकः । तेन ऋगात्मकेपि मन्त्रे यजुर्वेदीयकठशाखास्थे भवति ॥ किञ्च ऋग्वेदेपि भवति । स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः । यजुषीति किम् । देवाञ्जिगाति सुम्नयुः । बह्वृचानामप्यस्ति कठशाखा । ततो भवतीदं प्रत्युदाहरणमिति हरदत्तः । काठके इति किम् । सुम्नयुरिदमासीत् ॥

## कव्यध्वरपृतनस्यर्चि लोपः । ७ । ४ । ३९ ॥

सपूर्वयानि विदा कव्यतायोः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्यून् ॥

## द्यतिस्यतिमास्थामित्ति किति । ७ । ४ । ४० ॥

एषामिकारोन्तादेशः स्यात्तादौ किति । ईत्वदद्भावयोरपवादः । दितः । सितः । मा माङ् मेङ् मितः । स्थितः । तादौ किम् । अवदाय । किति किम् । अवदाता ॥

## शाछोरन्यतरस्याम् । ७ । ४ । ४१ ॥

शितः । शातः । छितः । छातः । व्यवस्थितविभाषात्वाद्व्रते विषये श्यतेर्नित्यम् । संशितं व्रतम् । सम्यक् संपादितमित्यर्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥

## दधातेर्हिः । ७ । ४ । ४२ ॥

तादौ किति । अभिहितम् । निहितम् ॥

## जहातेश्च क्त्वि । ७ । ४ । ४३ ॥

हित्वा । हाङस्तु हात्वा ।

## विभाषा छन्दसि । ७ । ४ । ४४ ॥

हित्वा शरीरम् । हीत्वा वा । हात्वेति पाठे घुमास्थेतीत्वं छान्दसत्वान्न ।

## सुधितवसुधितनेमधितधिष्वधिषीय च । ७ । ४ । ४५ ॥

सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितम् । वसुधितमग्नौ । नेमधिता न पौंस्या ॥ क्तिन्यपि दृश्यते ॥ * ॥ उत श्वेतं वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङ् इट् इटोत् । धासीयेति प्राप्ते ॥

## दो दद्घोः । ७ । ४ । ४६ ॥

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति । चर्त्वम् । दत्तः । दत्तवान् । दत्तिः । दत्वा । दः किम् । धेट् धीतः । घोः किम् । दातं बर्हिः । अवदातं मुखम् । तान्तो वायमादेशः । न चैवं विदत्तमित्यादावुपसर्गस्य दस्तीति दीर्घापत्तिर्दे इति षष्ठ्याः सप्तम्यर्थत्वेन तान्तदाधातुघटितोत्तरपदे इति हि तस्यार्थ इति वाच्यम् । तकारादौ तद्विधानात् । दान्तो धान्तो वा । न च दान्तत्वे निष्ठानत्वम् । धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यम् । सन्निपातपरिभाषाविरोधात् ॥

## अच उपसर्गात्तः । ७ । ४ । ४७ ॥

अच इत्यावर्तते । अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति ॥ चर्त्वम् । प्रत्तः । अवत्तः । अचः किम् । निर्दत्तम् । उपसर्गात्किम् । दधि दत्तम् ।

परः। किन्तु वेदोपलक्षकः। तेन ऋगात्मकेपि मन्त्रे यजुर्वेदीयकठशाखास्थे भवति॥ किञ्च ऋग्वेदेपि भवति। स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः। यजुषीति किम्। देवाञ्जिगान्ति सुम्नयुः। बह्वृचानामप्यस्ति कठशाखा। ततो भवतीदं प्रत्युदाहरणमिति हरदत्तः। काठके इति किम्। सुम्नयुरिदमासीत्॥

**कव्यध्वरपृतनस्यर्चि लोपः। ७। ४। ३९॥**

सपूर्वयानि विदा कव्यतायोः। अध्वर्युं वा मधुपाणिम्। दमयन्तं पृतन्यून्॥

**द्यतिस्यतिमास्थामित्ति किति। ७। ४। ४०॥**

एषामिकारोन्तादेशः स्यात्तादौ किति। ईत्त्वदद्भावयोरपवादः। दितः। सितः। मा माङ् मेङ् मितः। स्थितः। तादौ किम्। अवदाय। किति किम्। अवदाता॥

**शाछोरन्यतरस्याम्। ७। ४। ४१॥**

शितः। शातः। छितः। छातः। व्यवस्थितविभाषात्वाद्व्रते विषये श्यतेर्नित्यम्। संशितं व्रतम्। सम्यक् संपादितमित्यर्थः। संशितो ब्राह्मणः। व्रतविषयकयत्नवानित्यर्थः॥

**दधातेर्हिः। ७। ४। ४२॥**

तादौ किति। अभिहितम्। निहितम्॥

**जहातेश्च क्त्वि। ७। ४। ४३॥**

हित्वा। हाङस्तु हात्वा।

**विभाषा छन्दसि। ७। ४। ४४॥**

हित्वा शरीरम् । हीत्वा वा । हात्वेति पाठे घुमास्थेतीत्वं छान्दसत्वान्न ।

## सुधितवसुधितनेमधितधिष्वधिषीय च । ७ । ४ । ४५ ॥

सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितम् । वसुधितमग्नौ । नेमधिता न पौंस्या ॥ क्तिन्यपि दृश्यते ॥ * ॥ उत श्वेतं वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङ् इट् इटोत् । धासीयेति प्राप्ते ॥

## दो दद्घोः । ७ । ४ । ४६ ॥

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति । चर्त्वम् । दत्तः । दत्तवान् । दत्तिः । दत्वा । दः किम् । धेट् धीतः । घोः किम् । दातं बर्हिः । अवदातं मुखम् । तान्तो वायमादेशः । न चैवं विदत्तमित्यादावुपसर्गस्य दस्तीति दीर्घापत्तिर्द इति षष्ठ्याः सप्तम्यर्थत्वेन तान्तदाधातुघटितोत्तरपदे इति हि तस्यार्थ इति वाच्यम् । तकारादौ तद्विधानात् । दान्तो धान्तो वा । न च दान्तत्वे निष्ठानत्वम् । धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यम् । सन्निपातपरिभाषाविरोधात् ॥

## अच उपसर्गात्तः । ७ । ४ । ४७ ॥

अच इत्यावर्तते । अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति ॥ चर्त्वम् । प्रत्तः । अवत्तः । अचः किम् । निर्दत्तम् । उपसर्गात्किम् । दधि दत्तम् ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव सम्भवाद्विशेषणं च शब्दाद्यथा प्राप्तम् । सूत्तमिति तु न प्राप्नोति । गतिश्चेत्यत्र भाष्ये सोस्तत्त्वे उपसर्गत्वप्रतिषेधादित्याहुः । द्यतेरित्वादच इत्येतद्भवति विप्रतिषेधेन । अवत्तं प्रत्तं जुहोति ॥

## अपो भि । ७ । ४ । ४८ ॥

अपस्तकारः स्याद्भादौ प्रत्यये परे ॥ अद्भिः । अद्भ्यः । भि किम् । अप्सु ॥ मासश्छन्दसीति वक्तव्यम् ॥ * ॥ माद्भिः । शरद्भिः ॥ स्ववस्स्वतवसोरुषसश्चेष्यते ॥ * ॥ स्ववद्भिः । अवतेरसुन् । शोभनमवो येषां ते स्ववसः तैः । तु इति सौत्रो धातुः । तस्मादसुन् । स्वं तवो येषान्तैः स्वतवद्भिः । समुषद्भि रजा यथाः मिथुनेभिः । वसेः किच्चेत्यसि प्रत्यय इति हरदत्तः । पञ्चपाद्यां तु उषः किदित्युक्तम् ॥

## सः स्यार्धधातुके । ७ । ४ । ४९ ॥

सस्य तः स्यात्सादावार्धधातुके ॥ घत्स्यति । वत्स्यति । सः किम् । वक्ष्यति । सि किम् । वासः । आर्धधातुके किम् । वस्से ।

## तासस्त्योर्लोपः । ७ । ४ । ५० ॥

तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये । परे । कर्तासि कर्तासे । त्वमसि । व्यतिसे ॥

## रि च । ७ । ४ । ५१ ॥

रादौ प्रत्यये प्राग्वत् । कर्तारौ । कर्तारः ॥

## ह एति । ७ । ४ । ५२ ॥

तासस्त्योः सस्य हः स्यादेति परे । कर्ताहे । व्यतिहे । भावयामासे इत्यत्र तु तशब्दस्य एशि इट एत्वे च कृते ह एतीति हत्वं न । तासि साहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एव एति हत्वप्रवृत्तेरित्याहुः ॥

## यीवर्णयोर्दीधीवेव्योः । ७ । ४ । ५३ ॥

यिश्च इवर्णश्चेति द्वन्द्वः । यीत्यत्रेकार उच्चारणार्थः । एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । दीध्यते । वेव्यते । आदीध्य । आवेव्य । दीधिता । दीधिष्यते । वेविता । वेविष्यते । दीधीत । वेवीत । इह तु लोपं बाधित्वा नित्यत्वादेरेत्वम् । दीध्ये । वेव्ये । यीवर्णयोः किम् । दीधीते । दीध्याते । दीध्यते । वेवीते । वेव्याते । वेव्यते ॥

## सनि मीमाघुरभलभशकपतपदामच इस् । ७ । ४ । ५४ ॥

सीति वर्तते । एषामच इस् स्यात्सादौ सनि । वक्ष्यमाणेनाभ्यासलोपः । डुमिञ् मीञ् आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषात् इस् सः सीति तः । मित्सति । मित्सते । मा माने । मित्सति । माङ् मेङोः मित्सते । दोदाणोः दित्सति । देङ् दित्सते । दाञ् दित्सति । दित्सते । धेट् धित्सति धाञ् । धित्सति । धित्सते । स्कोरिति सलोपः । रिप्सते । शक्लृ शिक्षति । शक मर्षणे दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पित्सति । प्रपित्सते । सनि किम् । दास्यति । सि किम् । पिपतिषति ॥

राधो हिंसायां सनीस् वाच्यः ॥ * ॥ रित्सति । हिंसायां किम् । आरिरात्सति ॥

## आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ॥

एषामच ईत्स्यात्सादौ सनि । आप्तुमिच्छति ईप्सति । ज्ञपिः णुगन्तो मित्सञ्ज्ञः पकारान्तश्चौरादिकश्च । इडभावे इको झलिति कित्वान्न गुणः अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते । अनन्त्ये सावकाशमीत्वं तु पूर्वविप्रतिषेधात् । ज्ञीप्सति । अर्धितुमिच्छति । रपरत्वं चर्त्वम् । ईर्त्सति । सनि किम् । आप्स्यति । सि किम् । जिज्ञपयिषति । अर्दिधिषति ॥

## दम्भ इच्च । ७ । ४ । ५६ ॥

दम्भेरच इत्स्यादीच्च सादौ सनि । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्वान्न लोपः । धिप्सति । धीप्सति । सि किम् । दिदम्भिषति ॥

## मुचोऽकर्मकस्य गुणो वा । ७ । ४ । ५७ ॥

सादौ सनि । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः ॥

## अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ॥

सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । तथा चैवोदाहृतम् । अभ्यासस्येत्येतच्चाधिकृतं वेदितव्यम् । आ अध्यायपरिसमाप्तेः । सनिमीमेत्याद्यनुवृत्त्यैव सिद्धेऽत्र ग्रहणं विषयावधारणार्थम् । अत्रैवाभ्यासलोपो भवति सन्वद्भावात्प्राप्तो न भवति ।

अमीमपत्। अदीदपत्। अजिज्ञपत्। इत्यादयोपि सन्वद्भावेन तु न भवन्ति। मीमादीनां हि धातूनामच इत्यादयो विधीयन्ते। न च धातुकार्यं प्रति सन्वद्भावोऽस्ति। अभ्यासकार्यविषयत्वात्तस्य सर्वस्याभ्यासस्यायं लोप इष्यते। तदर्थमेव केचिदचग्रहणं वर्णयन्ति। अत्राभ्यासत्वेन यो निर्ज्ञातस्तस्य लोप इत्यर्थसङ्गतेरिति दिक्॥

## ह्रस्वः ७। ४। ५९॥

अभ्यासस्याचो ह्रस्वः स्यात्। चच्छतुः। डुढौके। तुत्रौके। ऊखतुः। ऊखुरित्यत्र तु सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न तु भवति सकृत्प्रवृत्तत्वात् आङ्गत्वाद्वा पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः वार्णादाङ्गं बलीय इति न्यायात् परत्वाच्च॥

## हलादिः शेषः। ७। ४। ६०॥

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। जग्लौ। मम्लौ। पपाच। पपाठ। अभ्यासस्येति जातिपरो निर्देशः तेन आट आटतुः आनछ आनछतुरित्यादौ ठकारादिनिवृत्तिः सिध्यति क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात्॥

## शर्पूर्वाः खयः। ७। ४। ६१॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो लुप्यन्ते। हलादिः शेषस्यापवादः। चुश्च्योत। तस्थौ। पस्पर्द्धे। उचिच्छिषतीत्यत्र तु उछेस्तुक् श्चुत्वम्। पूर्वत्रासिद्धीयमद्विर्वचन इति चछाभ्यां सहितस्येटो द्वित्वम्। हलादिः शेषः। निमित्तापाये नैमित्तिकापाय

इति त्वनित्यम् । च्छ्वोरिति सतुक्कग्रहणाज्ज्ञापकात् प्रकृतिप्रत्ययापत्तिवचनाद्वा ॥

### कुहोश्चुः । ७ । ४ । ६२ ॥

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् । चकार । चखान । जगाम । जघास । ङुङुवे । जहार । जहौ ॥

### न कवतेर्यङि । ७ । ४ । ६३ ॥

कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते । यङ्लुकि चोकवीति चोकोति । यङि किम् । चुकुवे ॥

### कृषेश्छन्दसि । ७ । ४ । ६४ ॥

यङि अभ्यासस्य चुत्वं न । करीकृष्यते । छन्दसि किम् । चरीकृष्यते ॥

### दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रदत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ।७।४।६५॥

एते ऽष्टादश निपात्यन्ते । तत्र दाधर्तीति धृङो धारयतेर्वा श्लौ धृङो यङ्लुकि वा परस्मैपदमभ्यासस्य दीर्घत्वं णिलुक् च यथायथमप्राप्तं निपात्यते। दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनप्राप्तदीर्घाभावः । श्लुपक्षे तु रुगपि । दर्धर्षीत्यत्र तु यङ्लुक्पक्षे न किंचिन्निपात्यं किंतु श्लावेव । भवतेर्यङ्लुगन्तस्य गुणाभावः तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लटि हलादिःशेषापवादो रेफस्य लत्वं इत्वाभावश्च निपात्यते । अलर्षि युध्मत्र-

जकृत्पुरन्दर। विपा निर्देशो न तन्त्रम्। अलर्ति दक्ष उत। फणतेरा-
ङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते। अन्वा-
पनीफणत्। स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् धातुस-
कारस्य षत्वम्। न चात्र संपूर्वता तन्त्रम् अन्यत्रापि हि दृश्यते आसनि-
ष्यदितीति वृत्तिः। करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावः।
क्रन्देर्लुङि द्विवचनं अभ्यासस्य चुत्वाभावो निगागमश्च। कनिक्रद-
ज्जनुषम्। अक्रन्दीदित्यर्थः। बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य
जश्त्वाभावः। बिभ्रोभरिभ्रदोषधीषु। ध्वरतेर्यङ्लुगन्तस्य शतरि
अभ्यासस्य विगागमः धातोर्ऋकारलोपश्च। जसन्तमेतत्। दविध्वतो
रश्मयः सूर्यस्य। द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणा-
भावोऽत्वं विगागमश्च। दविद्युतद्दीद्यच्छोशुचानः। तरतेः शतरि श्लौ
अभ्यासस्य रिगागमः षष्ठ्येकवचनान्तमेतदिति वृत्तिः जसन्तमिति
कश्चित्। सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमो अभ्यासस्य।
वरीवृजदिति वृजेः शतरि श्लावभ्यासस्य रीक्। मर्मृज्य इति
मृजेर्लिटि णलि अभ्यासस्य रुक् धातोश्च युक् ततो मृजेर्वृद्धिर्न
भवत्यलघूपधत्वात्। लघूपधगुणे प्राप्ते वृद्धिरारभ्यते इति वृत्तिः।
वृद्ध्यभावोऽपि छान्दसत्वादिति कश्चित्। गमेराङ्पूर्वस्य लिटि श्लाव-
भ्यासस्य चुत्वाभावो नीगागमश्च। वक्ष्यन्ती वेदागनीगन्ति कर्णम्।
इतिशब्द एवंप्रकाराणामन्येषामपि संग्रहार्थः॥

## उरत्। ७। ४। ६६॥

अभ्यासे ऋवर्णस्यात्स्यात्प्रत्यये परे। रपरत्वं हलादिः
शेषः। चकार। ववृते। चच्छृदतुः। नर्नर्ति। प्रत्यये किम्। वव्रश्च॥

द्युतिस्वाप्योः संप्रसारणम् । ७ । ४ । ६७

अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । दिद्योतिषते । दिद्युतिषते । व्यदिद्युतदित्यपि वत्तावुदाहृतम् । सुष्वापयिषति ॥

व्यथो लिटि ७ । ४ । ६८ ॥

व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिःशेषापवादः । यस्य हलादिः शेषेण निवृत्तिः । अत्र यद्वक्तव्यं तल्लिट्यभ्यासस्येत्यत्रोक्तम् । विव्यथे । लिटि किम् । वाव्यथ्यते ॥

दीर्घ इणः किति । ७ । ४ । ६९ ॥

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयुः । किति किम् । इयाय । इययिथ । इयेथ ॥

अत आदेः । ४ । ७० ॥

अभ्यासस्यादेरतो दीर्घः स्यात् । एकादेशापवादः । आट । आटतुः । आनृधतुः । आदेः किम् । पपाच । लिटीत्येव । अरति ॥

तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् ॥ आनर्द । आनर्च । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेन द्विहल्त्वादिह नुट् । आनृजे । इह तु द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावादिह न नुट् । आञ्छि आयामे । आञ्छ । तपरकरणं मुखसुखार्थमिति मते तु नुट् । आनाञ्छ ॥

## अश्नोतेश्च । ७ । ४ । ७२ ॥

दीर्घादभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । अश्नातेस्तु आश ॥

## भवतेरः । ७ । ४ । ७३ ॥

भवतेरभ्यासोकारस्य अः स्याल्लिटि । बभूव । बभूवतुः । बभूवुः । बभूवे । अनुबभूवे । लिटि किम् । बुभूषति । बोभूयते ।

## ससूवेति निगमे । ७ । ४ । ७४ ॥

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते ॥ गृष्टिः ससूव स्थविरम् । सुषुवे इति भाषायाम् ॥

## निजां त्रयाणां गुणः श्लौ । ७ । ४ । ७५ ॥

निज् विज् विष् एषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । वेवेक्ति । वेवेष्टि । श्लौ किम् । निनेज ॥

## भृञामित् । ७ । ४ । ७६ ॥

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । मिमीते । जिहीते । त्रयाणां किम् । जहाति । श्लौ किम् । बभार ॥

## अर्तिपिपर्त्योश्च । ७ । ४ । ७७ ॥

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । बहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानादयं धातुर्भाषायामपि । उरदत्वम् । हलादिः शेषः । इत्वम् । अभ्यासस्यासवर्णे इतीयङ् इयर्ति । पिपर्ति । पिपूर्तः । पिपूर्यात् । ह्रस्वान्तोऽयमिति केचित् ।

पिपृतः । पिपृयात् । पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ । छान्दसत्वं शरणम् । श्लौ किम् । आर । पपार ॥

## बहुलं छन्दसि । ७ । ४ । ७८ ॥

अभ्यासस्य इकारः स्याच्छन्दसि श्लौ । पूर्णां विवष्टि वशेरेतद्रूपम् । सचेः गर्भं माता सिषक्ति । घृ जिघर्म्यग्निं हविषा घृतेन । हृ अयं स्रुवो अभिजिहर्ति होमान् । न च भवति ददातीत्येवं ब्रूयात् ॥

## सन्यतः । ७ । ४ । ७९ ॥

अभ्यासस्यात इकारः स्यात्सनि । पिपक्षति । पिपासति । चिच्छादयिषति । अधीषिषति । प्रतीषिषति । सनि किम् । पपाच । अतः किम् । लुलूषति । तपरकरणं किम् । पापच्यतेः सन् । पापचिषते ॥

## ओः पुयण्ज्यपरे । ७ । ४ । ८० ॥

सनि परे यदङ्गं तदवयवस्य अभ्यासोवर्णस्य इत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । पिपविषते । पिपावयिषति । बिभावयिषति । मिमावयिषति । यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । जु गतौ सौत्रो धातुः । जुचङ्क्रम्येत्यत्र निर्दिष्टः । अयमेव वर्गप्रत्याहारजकारग्रहो लिङ्गं णौ द्वित्वात्प्रागच आदेशो नेतीत्युक्तम् । ओः किम् । पापचिषते । पुयण्जीति किम् । नुनावयिषति । तुतावयिषति । चुचावयिषति । फुफ्फारयिषति । ऊर्णुनावयिषति । अपरे किम् । बुभूषति ।

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७ । ४ । ८१ ॥

एषामभ्यासोकारस्य इत्वं वा स्यादवर्णपरे धात्वक्षरे परे । सिस्रावयिषति । सुस्रावयिषति इत्यादि । अपरे इत्येव । सुस्रूषति । शुश्रूषते ॥

गुणो यङ्लुकोः ७ । ४ । ८२ ॥

अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । चेचीयते । लोलूयते । चोच्छूद्यते । जोहवीति । चोक्रुशीति । चेच्छिदीति ॥

दीर्घोऽकितः । ७ । ४ । ८३ ॥

अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । पापच्यते । पापचीति । यायज्यते । यायजीति । अकितः किम् । यंयम्यते । यंयमीति । बहुव्रीहिश्चायम् । न विद्यते किद्यस्मिन्नित्यर्थः । तेन हाकोपि हाङ्वत् जाहेतीति दीर्घः सिद्धः । अनन्तरस्येति न्यायेन प्रतिपदोक्तपरिभाषया चाभ्यासनिमित्तकित एव ग्रहणमिति चाच्छायत इत्यादौ न दोषः । नन्वजन्ताभ्यासस्य दीर्घ इत्यर्थे नुगुगादौ कृतेऽजन्तत्वाभावान्नीकि विशेषाभावाद्रिकि रीग्विधानेनैव सिद्धेरिविधिसामर्थ्यादेव तदभावसिद्धेः किमकित इत्यनेनेति चेन्न । अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थत्वात् । तेन छ्यतेः सनि द्वित्वेऽन्तरङ्गत्वात्तुकि चिच्छासतीत्यादावभ्यासह्रस्वेत्त्वसिद्धिः । न चैवमप्यपवादत्वान्नीगादिभिर्दीर्घबाधे व्यर्थमेव तदिति वाच्यम् । अभ्यासविकारे बाधका न बाधन्ते इत्यर्थस्यापि ज्ञापनात् । तेषां सति सम्भवे युगपदेव प्रवृत्तिः । यौगपद्यासम्भवे क्रमेणैव तथान्यच

बाधकप्रवृत्त्युत्तरं बाध्यप्रवृत्त्यभावः । प्रकृते तु तस्मिन्कृतेऽपि प्राप्ति-योग्यं बाध्यं भवत्येव । यत्र तु बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्य-योग्यता तत्र पूर्वं बाध्यस्य प्रवृत्तिरनन्तरं बाधकस्य प्रवृत्तिरिति । अत एव मीमांसतेऽचीकरदित्यादावित्वे कृते दीर्घं इति दिक् ॥

## नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । ७ । ४ । ८४ ॥

एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते सनीस्रंसीतीत्यादि ॥

## नुगतोऽनुनासिकान्तस्य । ७ । ४ । ८५ ॥

अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते स च पदान्तवद्वाच्यः । वा पदान्तस्येति यथा स्यात् । यय्यँम्यते । यंयम्यते । यय्यँमीति । यंयमीति । तन्तन्यते । तन्तनीति । जङ्गम्यते । जंगमीति । रंरम्यते । रंरमीति । अतः किम् । तेतिम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । भाम क्रोधे । बाभाम्यते । अनुनासिकान्तस्य किम् । पापच्यते इहान्तग्रहणं न कर्तव्यम् तदन्तविधिना सिद्धेः । तत्क्रियते अन्तस्यानुस्वारस्य यो धर्मः स यथा स्यादिति एवं चानुनासिका-न्तस्येति पृथक्पदे अनुनासिकेति लुप्तषष्ठीकम् ॥ एवं च पदान्तव-द्वाच्य इति सिद्धमिति पदमञ्जर्यां स्पष्टम् ॥

## जपजभदहदशभञ्जपशां च । ७ । ४ । ८६ ॥

एषामभ्यासस्य नुक् स्याद्यङ्लुकोः । गर्हितं जपति जंजप्यते इत्यादि । दंशिरयं लुप्तनकारो निर्दिष्टः तेन यङ्लुक्यपि नकारलोपो

भवति। दंदश्यते दंदशीतीति वृत्तिः। पश गतौ सोचः दन्त्यान्तोऽयमिति स्पश बाधनस्पर्शनयोरिति धातौ माधवः॥

**चरफलोश्च। ७। ४। ८७॥**

चरफलोरभ्यासस्यातो नुक् स्याद्यङ्लुकोः॥

**उत्परस्यातः। ७। ४। ८८॥**

चरफलोरभ्यासात्परस्यात उत्स्यात् यङ्लुकोः। हलि चेति दीर्घः। चंचूर्यते। चञ्चूर्यते। चञ्चुरीति। पंफुल्यते। पम्फुल्यते पंम्फुलीति। परस्य किम्। अभ्यासस्य मा भूत्। अतः किम्। अलोन्त्यस्य मा भूत्। उदिति तपरत्वान्न गुणः हलि चेति दीर्घस्तु स्यादेव। तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चंचूर्ति॥

**ति च। ७। ४। ८९॥**

चरफलोरत उत्स्यात्तादो प्रत्यये। चूर्तिः। फुल्लः। फुल्लवान् प्रफुल्लः। प्रफुल्तिः॥

**रीगृदुपधस्य च। ७। ४। ९०॥**

ऋदुपधस्याङ्गस्याभ्यासस्य रीगागमः स्याद्यङ्लुकोः। वरीवृत्यते। वरीवृतीति। तुभ्नादित्वान्न णः। नरीनृत्यते। नरीनृतीति। गृहू ग्रहणे। जरीगृह्यते। जरीगृहीति। गृणहातेस्तु यङ्लुकि नैवं किन्तु जाग्रहीति जाग्राढि यद्यपि तसादो ङिन्निमित्तं संप्रसारणं तथापि तस्य बहिरङ्गत्वेनासिद्धत्वान्न रीगादयः। जागृढः। जागृहति जरीगृधीति जरीगृध्यते। उभयत्र लत्वम्। चलीक्लृप्यते। चलीक्लृपीति। रीगृत्वत इति वक्तव्यम्॥*॥

वरीवृश्च्यते। परीपृच्छ्यते । बरीभृज्ज्यते । एतेषां यङ्लुकि वरीवृश्चीतीत्यादिरूपाणि न भवन्ति किंतु वाव्रश्चीति । वाव्रष्टि । पाप्रच्छीति। पाप्रष्टि। बाभ्रज्जीति। बाभ्रष्टि। तसादावपि ङिन्निमित्तं ग्रहिज्येति संप्रसारणं न भवति । श्तिपा निर्देशात् । तेन वाव्रष्टः पाप्रष्टः बाभ्रष्टः । वाव्रश्च्मः । च्छ्वोः शूडिति शः पाप्रश्मः बाभ्रज्ज्मः इत्यादीनि ऋत्वतो यङ्लुक्यपि । रीक् तु तृन्नमृचादीनामुदाहर्तव्यः । तरीतृच्यते । तरीतृन्नीति । मरीमृच्यते । मरीमृचीतीत्यादि ।

## रुग्रिकौ च लुकि । ७ । ४ । ९१ ॥

ऋदुपधस्याङ्गस्याभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि ॥ वर्वृतीति । वरिवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । अवर्वृतीत्३ । अवर्वर्त्३ । सिपि दश्चेति रुत्वपक्षे अवर्वाः । गणनिर्दिष्टत्वादङ् न। अवर्वर्तीत्३। जर्गृहीति३। जर्गर्ढि३। जर्गृढः३। जर्गृहति३ । अजर्घर्ट्३ । जर्गृधीति३ । जर्गर्द्धि३ । जर्गृद्धः । जर्घति । जर्गृधीषि। जर्घर्त्सि । अजर्गृधीत्३ । इडभावे हल्ड्यादिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् । अजर्गृद्धाम् । सिपि दश्चेति पक्षे रुत्वम् । अजर्घाः । अजर्गर्धीत्३ । अजर्गर्धिष्टाम् । मर्मृज्यत मर्मृज्यमानासः इत्युपसंख्यानम् ॥

## ऋतश्च । ७ । ४ । ९२ ॥

ऋदन्तस्याङ्गस्याभ्यासस्यापि तथा । चर्करीति३ । चर्कर्ति३ । चर्कराञ्चकार । चर्करिता । अचर्करीत् । अचर्कः । आशिषि रिङ् । चर्क्रियात् । अचर्करीत् । अत्रयङ्लुकि द्वित्वेऽभ्यासयोरत्वं रपरत्वम्। हलादिः शेषः । रुक्। रिग्रीकोस्तु । अभ्यास-

स्यासवर्णे इतीयङ् । अरर्ति । अरियर्ति । अररीति । अरियरीति । अर्ऋतः । अरियृतः । झि अत् यण् । ऋको रोरि लोपः । न च तस्मिन्कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रासिद्धे तन्निषेधात् । आरति । अरियति । अरराञ्चकार । अरियराञ्चकार । अररिता । अरियरिता । अररिष्यति । अरियरिष्यति । अररीतु । अरियरीतु । अर्ऋतात् । अरियतात् । आररीत् । आरियरीत् । आर्ऋताम् । आरियृताम् आररुः । आरियरुः । आरः । आरियरः । आररीः । आरियरीः । अर्ऋयात् । अरियृयात् । आशीर्लिङि श्तिपा निर्देशाद् गुणो ऽर्तीति गुणो न-रिङ् रलोपः दीर्घः । आरियात् । अरिरियात् । आरारीत् । आरियारीत् । आररिष्यत् । आरियरिष्यत् । ऋतश्चेति तपरत्वान्नेह । कॄ विक्षेपे । चाकरीति । तातरीति । चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातोर्हि । तातराणि । अतातरीत् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् अतातारिष्टामित्यादि ॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ ९३ ॥

चङ्परेइ ति बहुव्रीहिः ॥ स चाङ्गस्येति च पदद्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् । तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसति । अथवाङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् । पदमञ्जर्यां तु चङ्परे इत्यप्यनावर्त्यैव न विद्यते ऽग्लोपो यस्मिन् परतस्तादृशे चङ्परे यदङ्गं तस्य योऽभ्यासस्तस्येत्यादि व्याख्यातम् । सन्यत इत्याद्युक्तं चङ्परेऽपि तथा भवति । अचीकरत् । अपीपचत् । अचीकमत । अपीपवत् । अबीभवत् ।

मूड् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् । असिस्रवत् । असुस्रवत् इत्यादि । पुयराज्यपरे इत्येव । नेह । अतूतवत् । और्णूनवत् । अपुस्फुरत् । लघुनि किम् । अततक्षत् । अररक्षत् । राजयते अरराजत् । ऋदित्वान्नोपधाह्रस्वः । जागरयतेः अजजागरत् । लुङि चङि जाग्रोऽवीति गुणः । सर्वत्रैव लघोरानन्तर्यमभ्यासे नास्तीति येन नाव्यवधानं तेनैव व्यवहितेऽपीत्येकेन वर्णेन व्यवधाने वचनप्रामाण्याद्भवितव्यं न पुनरनेकवर्णसंघातेन कथमप्येतदिति । आचार्यप्रवृत्तिर्ज्ञापयति भवति संयोगव्यवहितानामित्वमिति यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं विदधाति । चङ्परे किम् । अहं पपच । परग्रहणं किम् । चङ्येव केवले मा भूत् । अचकमत । अनग्लोपे किम् अचकथत् । दृषदमाख्यत् अददृषत् ।

## दीर्घो लघोः । ७ । ४ । ९४ ॥

लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकरत् । अचूचुरत् । लघोः किम् । अबिभ्रजत् । अवीवददवूवुरदित्यादौ णयन्ताण्णिचि तु पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णौ णिलोपे तस्य स्थानिवत्त्वादग्लोपित्वाद्वा सन्वद्भावे दीर्घत्वञ्च न प्राप्नोति णयाकृतिनिर्देशाद्भवति । ननु चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यर्थे औन्दिददाटिटदित्यादौ दीर्घापत्तिः । चङ्परे णौ यदङ्गमौन्दिद् आटिट् इति तदीयोऽभ्यासो हि चङमादाय णिलोपस्य स्थानिवत्त्वेन णिमादाय वा लघुपर इति चेन्न चङ्निमित्तस्यैव लघोर्ग्रहणात् । अयमेव भाष्यप्रयोगश्चात्र प्रमाणमिति दिक् ।

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाच्चिति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किं त्वस्यावयवः कश्चित्तस्मादेकाच्चिदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णौविशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥

**अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् । ७ । ४ । ९५ ॥**

एषामभ्यासस्याकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र न दीर्घः । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

**विभाषा वेष्टिचेष्ट्योः । ७ । ४ । ९६ ॥**

अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

**ई च गणः । ७ । ४ । ९७ ॥**

गणेरभ्यासस्य ईत् स्याच्चङ्परे णौ चादत् । अजीगणत् । अजगणत् ।

इत्योरम्भट्टेन श्रीधोडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां श्रीव्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

श्रीगणेशायनमः ।

# अष्टमाध्यायस्य प्रथमः पादः ।



## सर्वस्य द्वे । ८ । १ । १ ॥

एतच्च पदस्येत्यतः प्रागधिकृतं वेदितव्यम् । वक्ष्यति नित्यवीप्सयोरिति नित्येर्थे वीप्सायां च यद्वर्तते तस्य सर्वस्य द्वे भवतः पचति २ । ग्रामो २ रमणीयः । इदं तु स्थाने द्विर्वचनमत एव पीनःपुनिक इत्यादौ स्थानिवत्त्वेन प्रातिपदिकत्वाट्ठञादिसिद्धिः । द्विःप्रयोगत्वे तु समासग्रहणकृतनियमेनाप्रातिपदिकत्वान्न स्यात् । न चैवमग्नेऽग्ने इत्यादाववयवे पदकार्यसिद्धिर्न स्यात् द्वे इति द्विवचनेनावान्तरपदत्वस्यापि स्वीकारात् स्थानिवत्त्वकृतपदत्वस्य समुदायेपि सत्त्वादाम् पचसि २ देवदत्तेत्यादावेकान्तरतासिद्धिरिति दिक् । पूर्वत्रासिद्धीयमद्विर्वचने इति वक्तव्यम् ॥ * ॥ द्रोग्धा द्रोग्धा-द्रोढा द्रोढा । ढत्वघत्वयोरसिद्धत्वादकृतयोरेव द्वित्वं प्राप्नोति पश्चात्तद्विकल्पे सत्यनिष्टमपि स्यात्तन्मा भूदिति वचनमिदम् ॥

## तस्य परमाम्रेडितम् । ८ । १ । २ ॥

द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । चोर चोर घातयिष्यामि त्वाम् । आम्रेडितप्रदेशा आम्रेडितं भर्त्सने इत्येवमादयः ॥

## अनुदात्तं च । ८ । १ । ३ ॥

द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवे दिवे ॥

## नित्यवीप्सयोः । ८ । १ । ४ ॥

पदस्येति वक्ष्यमाणमिहापकृष्यते । आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा । वीप्सायाम् । वृक्षं वृक्षं सिञ्चति देवदत्तः । ग्रामो ग्रामो रमणीयः । पदस्येति किम् । नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य मा भूत् । सर्वस्येति किम् । स्वादिष्विति पदसंज्ञामादाय वृक्षाभ्यामित्यादौ प्रकृतिभागमात्रस्य मा भूदित्याहुः । प्रपचति प्रपचतीत्यादौ तु द्वित्वसिद्धये सगतिकस्येति वक्तव्यम् । सगतिकस्य द्वित्वे एकपद्यं नास्त्येव स्थानिनः पदत्वाभावेनादेशेऽपि तस्य दौर्लभ्यात् । द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन्सत्यपि न क्षतिरित्याहुः । यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात्प्रकर्षप्रत्यय इष्यते पचति २ तरामिति इह स्वाढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥

## परेर्वर्जने । ८ । १ । ५ ॥

परि परि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः । परेर्वर्जने वा वचनम् । परि वङ्गेभ्यो वृष्टो देवः । समासे तु समासेनैव वर्जनस्योक्तत्वान्नैव भवति । परि त्रिगर्तं वृष्टो देवः ॥

## प्रसमुपोदः पादपूरणे । ८ । १ । ६ ॥

एषां द्वे स्तः पादपूरणे । प्र प्रायमग्निः । सं समिद्युवसे । उपोप मे परामृश । किन्नोदुदु हर्षसे । पादपूरणे किम् । प्र देवं देव्याधिया । भाषायामनर्थकस्य प्रयोगाभावाच्छन्दस्येवेदम् ।

## उपर्यध्यधसः सामीप्ये । ८ । १ । ७ ॥

उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात्समीपदेशे इत्यर्थः । सामीप्ये किम् । उपरि चन्द्रमाः कथं तर्हि उपरि शिरसो घटं धारयतीति अत्राहुः । औत्तराधर्यमात्र-मिह विवक्षितं न तु सामीप्यमतो वस्तुतस्तत्सत्त्वेऽपि न द्वित्वम् । विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम् । अत्रोपक्षोपक्रमं तदाद्या-चिख्यासायामिति सन्नन्तप्रयोगो ज्ञापक इति ॥

## वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सन भर्त्सनेषु । ८ । १ । ८ ॥

असूयायाम् । सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ देव देव वन्द्योऽसि । कोपे । दुर्विनीत । दुर्विनीत इदानीं ज्ञास्यसि । कुत्सने धानुष्क धानुष्क वृथा ते धनुः । भर्त्सने । चोर चोर घात-यिष्यामि त्वाम् ॥

## एकं बहुव्रीहिवत् । ८ । १ । ९ ॥

द्वे इत्यनुवर्तते । तच्चानुवाद्यसमर्पकम् । द्विरुक्त एकशब्द बहुव्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपो लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदा-यात्सुप् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः न बहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् तेनातिदि-ष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः । वस्तुतस्तु भाष्यमते प्रत्या-ख्यातमेव तत् सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न बहुव्रीहावितीहातिदेशशङ्कैव नास्ति । एकैकस्मै देहि ॥

## आबाधे च । ८ । १ । १० ॥

पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । बहुव्रीहिवद्भावात्सुब्लुक् । गतगता । इह पुम्वद्भावः । नन्वेवं न न करोति सु सु जागर्तीत्यत्र न लोपो नञ इति 'नलोपो नञ्सुभ्यामित्यन्तोदात्तत्वं च स्यादिति चेन्मैवम् उभयत्रापि बनं समासे इत्यतः समासग्रहणानुवृत्त्यपकर्षाभ्यां मुख्यसमासस्यैव ग्रहणादित्याहुः । एवं धूर्धूः पथि पंथा इत्यादौ समासान्तोपि समासाच्च तद्विषयादित्यतः समासादित्यनुवर्तमाने समासांता इति पुनः समासग्रहणात्समासाधिकारविहितसमासस्यैव ग्रहणान्नेति बोध्यम् ॥

## कर्मधारयवदुत्तरेषु । ८ । १ । ११ ॥

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम् । प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि । अधिकारेणैव सिद्धे उत्तरेष्विति स्पष्टार्थम् ॥

## प्रकारे गुणवचनस्य । ८ । १ । १२ ॥

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । कर्मधारयवदुत्तरेष्वित्यधिकारात् तेन पूर्वभागस्य पुंवद्भावः समासस्येत्यंतोदात्तत्वं च । पटुपट्वी । पटुपटुः । पटुसदृशः ईषत्पटुरिति यावत् । इह द्वित्वेन जातीयरो बाधो नेष्यते इति वामनः । अन्यथा ब्राह्मणजातीय इत्यादौ अगुणवचने गुणवचनेपि भेदरूपेर्थे सावकाशो जातीयर् गुणवचनेषुसादृश्ये परेण द्वित्वेन बाध्येतेति भावः । जयादित्यस्तु जातीयर्विधौ विशेष एव प्रकारशब्दार्थ इत्याह गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्ल

रूपम् । शुक्लशुक्लः पटः । ननु प्रकारे सर्वेषां गुणवचनत्वाद् गुणवचनग्रहणानर्थक्यम् । तत्सामर्थ्यान्मुख्यवृत्त्या गुणपराणामेव द्वित्वम् । नत्वन्येषामित्याकरः । तेन सिंहो माणवक इत्यादौ न द्वित्वम् । नव नवं प्रीतिरहो करोतीत्यत्र तु वीप्सायां द्वित्वम् । अनेन तु द्वित्वे सुबलुक् स्यात् । यथा नवनवा वनवायुभिराददे इति पुंवद्भावः । कथं भीतभीत इव शीतमयूख इति भारविः । इव शब्देन सादृश्यस्योक्ततया इह प्रकारे द्वित्वायोगात् । भीतेभ्यो भीत इति कथंचिद्व्याख्येयम् । तेनातिभीत इति फलितम् । यत्त आधिक्ये द्वे इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तम् । तदाकरभ्रमोक्तिमात्रम् । तादृशवचनानुपलम्भात् । कथं खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्येति मेघदूतः । एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्या । अथ कथं मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वामिति मेघदूतः । मन्दमन्दमुदितः प्रययौ खमितिवल्लुक् प्राप्तः वीप्सार्थस्य चासम्भवादिति चेत्सत्यम् । अर्के मन्दपदमतिशयलक्षकं कमलानि कमलानीतिवत् । आनुपूर्व्ये द्वे वाच्ये ॥ * ॥ एकस्यैकमेव मूलमितरेषां तूपरि संनिवेशापेक्षो गौणो मूलव्यपदेशः । न चेकरूपं भागानां स्थौल्यम् । किन्तु यथामूलमुपचीयते स्थौल्यम् । एकजातीयानां पदार्थानामेकरूपगुणाद्यन्वये च वीप्सेति वाप्साभावादारम्भः । मूले मूले स्थूलः ॥ मूले मूले पृथु विटपिनामित्यादौ तु वीप्सायामेव द्वित्वम् ॥ स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम् ॥ * ॥ अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि । स्वार्थे एतद् द्विर्वचनं न तु वीप्सा-

विहायसो विहश्च ॥ ४ । ३ । १६० ॥

विहायसः पराद्गमः खखड्डाः भवन्ति । विहायसश्च विहादेशः । विहायसा गच्छतीति विहंगमः । विहंगः । विहगः ॥

उरगः ॥ ४ । ३ । १६१ ॥

उरगः शब्दात्परात् गमः डः उश्च लुग् निपात्यते । उरसा गच्छतीत्युरगः ।

सुगदुर्गमाधारे ॥ ४ । ३ । १६२ ॥

सुगदुर्ग इत्याधारे डप्रत्ययांतौ निपात्येते । सुखेन गम्यते तस्मिन्निति सुगं । दुर्गं । सुगमनं । दुर्गमनम् । इत्यस्वरूपत्वादनडपि भवति । आधार इति किम्? । सुखेन गच्छतीति सुगन्ता । दुर्गन्ता । सुगमः । दुर्गमः । इति कर्मणि ।

निर्गो देशे ॥ ४ । ३ । १६३ ॥

निर्ग इत्याधारे देशे निपात्यते । निर्गम्यते तस्मिन्देशे इति निर्गोदेशः अन्यत्र—निर्गमनः ।

नोम्न्यश्शमः ॥ ४ । ३ । १६४ ॥

सुबन्तात्पराद्धातोर्नाम्नि आकारप्रत्ययो भवति । शङ्करः । शंभवः । शंवदः । हेत्वादावपि नाम्नि परत्वादयमेव टः शंकरा-नाम शकुनिका परिव्राजिका तच्छीला च । नाम्नीति किम्? शंकरी विद्या ॥

पार्श्वादिभ्यश्शीङः ॥ ४ । ३ । १६५ ॥

पार्श्वादिभ्यः सुबन्तेभ्यः परात् शीङः अप्रत्ययो भवति । पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः । दिग्धेन सह शेते दिग्धसहशयः । पार्श्वादयः प्रयोगगम्याः ॥

उत्तानादिभ्यः कर्तुः ॥ ४ । ३ । १६६ ॥

उत्तानादिभ्यः कर्तृवाचिभ्यः परात् शीङः अप्रत्यय

भवति । उत्तानः शेते उत्तानशयः । अवमूर्द्धशयः । उत्तानादयः प्रयोगगम्याः ॥

आधारात् ॥ ४ । ३ । १६७ ॥

आधारवाचिनः सुबन्तात्परात्शीङः अप्रत्ययो भवति खे शेते खशयः । बिलशयः । गुहाशयः । गिरिश इति लोमादित्वात् शः ॥

भिक्षासेनादायाच्च चरष्टः ॥ ४ । १६८ ॥

भिक्षादिभ्यः आधारवाचिभ्यः सुबन्तेभ्यः परात् चरेष्टप्रत्ययो भवति । भिक्षां चरति भिक्षाचरः । भिक्षाचरी । सेनाचरः सेनाचरी । आदायचरः । आदायचरी । आदायेति ल्यान्तः । कुरुषु चरति कुरुचरः । मद्रचरः । एभ्य इति किम् ? कुरून् चरति ॥

पुरोऽग्रतोऽग्रेस्सर्तेः ॥ ४ । ३ । १६९ ॥

पुरआदिभ्यः सुबन्तेभ्यः परात्सर्तेष्टो भवति एकारान्तत्वं च निपात्यते । अग्रे इति पुरःसरतीति पुरःसरः । अग्रतः सरतीति अग्रेण सरति, अग्रे सरतीति वाग्रेसरः ॥

पूर्वात्कर्तुः ॥ ४ । ३ । १७० ॥

पूर्वशब्दात्कर्तुः परात् सर्तेः टो भवति । पूर्वः सरति पूर्वसरः । कर्तुरिति किम् ? पूर्वं देशं सरति पूर्वसारः ॥

स्थः कः ॥ ४ । ३ । १७१ ॥

सुबन्तात्परात्तिष्ठतेः को भवति । समे तिष्ठति समस्थः । विषमस्थः ॥

दुहो घश्च ॥ ४ । ३ । १७२ ॥

सुबन्तात्पराद्दुहेः को भवति । घश्चास्यादेशः । कामान् दुग्धे कामदुघा । पूर्वाय दुग्धे पूर्वदुघा, धेनुः ॥

शोकापनुदतुन्दपरिमृजस्तंबेरमकर्णेजपास्सुखाह
रालस्यहस्तिसूचकाः ॥ ४ । ३ । १७२ ॥

शोकापनुदादयः कप्रत्ययान्ता निपात्यन्ते । यथासंख्यं सुखाहरादयश्चेत्कर्तारो वाच्या भवन्ति । शोकमपनुदतीति शोकापनुदः । सुखाहरः । सुखस्याहरः । सुखस्याहर्ता । शोकापनुदोऽन्यः । तुन्दपरिमृजोऽलसः । तुन्दपरिमार्जोन्या । स्तम्बेरमो हस्ती । स्तम्बेरन्ताऽन्यः । कर्णेजपः सूचकः । कर्णेजपिताऽन्यः ॥

मूलविभुजादयः ॥ ४ । ३ । १७४ ॥

मूलविभुजादयः नियतार्थधातूपपदाः कप्रत्ययान्ता यथाशिष्टप्रयोगा साधवो वेदितव्याः । मूलानि विभुजति मूलविभुजो रथः । नखाम्मुञ्चति नखमुचानि धनूंषि । काकेभ्यो गूहितव्याः काकगुहास्तिलाः । कौ मोदते कुमुदम् । द्वाभ्यां पिबतीति द्विपः । अनेकपः । कच्छपः । पादपः । धर्माय प्रददातीति धर्मप्रदः । कामप्रदः । स्वर्गप्रदः । शास्त्रप्रदः । शास्त्रेण प्रजानातीति शास्त्रप्रज्ञः ॥

विरभजः ॥ ४ । ३ । १७५ ॥

सुबन्ताद्भजेर्द्धातोर्विण् भवति । अर्धभाक् । प्रभाक् । वकारो विण्क्विपोः साम्यार्थः । तेनेह क्विप् न भवति ॥

स्पृशोऽनुदकात् क्विप् ॥ ४ । ३ । १७६ ॥

अनुदकात् सुबन्तात्परात् स्पृशेर्द्धातोः क्विप् भवति । घृतं स्पृशतीति घृतस्पृक् । मंत्रेण स्पृशतीति मंत्रस्पृक् । अनुदकादित्युदकस्पर्शः । अनुपसर्गः सुप्परिगृह्यते । तेनेह न भवति—उपस्पृशतीति । अनुदकादिति किम् ? उदकस्पर्शः । उदकेन स्पृष्टः ॥

कर्मणीति वर्तते । चेलार्थेषु कर्मसु वाचु क्नोपयतेर्णम् भवति वर्षप्रमाणे गम्ये । चेलक्नोपं वृष्टो देवः । एवं वस्त्रक्नोपं वसनक्नोपम् ।

शुष्कचूर्णभक्षेषु पिषः ॥ २० ॥

कर्मणीति वर्तते । शुष्क चूर्ण भक्ष इत्येतेषु कर्मसु वाक्षु पिषेर्णम् भवति । शुष्कपेषं पिनष्टि तगरम् । शुष्कं पिनष्टीत्यर्थः । एवं चूर्णपेषं पिनष्टि । भक्षपेषं पिनष्टि । घञि सति क्रियाविशेषणे शुष्कस्य पेषं पिनष्टि इत्येवमादयः प्रयोगाः साधवः । इतः प्रभृति उपदंशो भायामित्यतः प्राक् यत एव धोर्णम् भवति तस्यैवानुप्रयोगोऽपि भवत्यभिधानवशात् ।

जीवाकृते ग्रहिकृञः ॥ २१ ॥

कर्मणीति वर्तते । जीव अकृत इत्येतयोः कर्मवाचिनोर्वाचोर्यथासंख्यं ग्रहि कृञ् इत्येताभ्यां णम् भवति । जीवग्राहं गृहीतः । अकृतकारं करोति

निमूले कषः ॥ २२ ॥

कर्मणीति वर्तते । निमूले कर्मणि वाचि कषेर्णम् भवति । निमूलकाषं कषति । घञि सति क्रियाविशेषणे निमूलस्य काषं कषति इत्यपि भवति ।

समूले हनश्च ॥ २३ ॥

कर्मणीति वर्तते । समूले कर्मणि वाचि हन्तेः कषेश्च णम् भवति । समूलघातं हन्ति । समूलकाषं कषति ।

करणे ॥ २४ ॥

हन इति वर्तते । करणे वाचि हन्तेर्णम् भवति । पाणिघातं कुड्यं हन्ति । पाणिना हन्तीत्यर्थः । पादघातं शिलां हन्ति यदा हिंसार्थो हन्तेर्विवक्षितः तदा हिंसार्थादेककर्मकादि

णमपि द्वैव्यिधिं पूर्वविप्रतिषेधेन बाधित्वा अयमेव णम् । असिघातं हंति चौरान् कोऽत्र विशेषः अनेन नित्यः समिधिः तस्यैव धोरनुप्रयोगश्च भवति ।

## हस्ते वर्तिग्रहः ॥ २५ ॥

करण इति वर्तते हस्त इति अर्थनिर्देशः । हस्तवाचिनि करणे वाचि वर्तयतिगृह्णातिभ्यां णम् भवति । हस्तवर्तं वर्तयति हस्तेन वर्तयति इत्यर्थः । एवं पाणिवर्तम् । करवर्तम् । हस्तग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः । एवं पाणिग्राहं करग्राहम् ।

## स्वेषु पुषः ॥ २६ ॥

करण इति वर्तते स्व इति स्वरूपस्य तद्विशेषाणां च ग्रहणम् । बहुत्वनिर्देशात् । स्ववाचिकरणवाचिनि पुषेर्णम् भवति । आत्मात्मीयज्ञातिधनानि स्वशब्देनेष्यन्ते । स्वपोषं पुष्टः । विद्यापोषं गोपोषं मातृपोषं पितृपोषं रैपोषं पुष्णाति । सर्वत्र घंजन्तेन णमन्तस्यार्थकथनं द्रष्टव्यम् । स्वेन पोषं पुष्टं इति स एव पुषिः कालसाधनभेदादन्यत्वं गतः पुषिणा युज्यते यथा पुषितुमिच्छति पुपुषिषति इषिरिषिणा युज्यते ।

## स्नेहने पिषः ॥ २७ ॥

करण इति वर्तते । स्निह्यतेऽनेनेति स्नेहनं स्नेहनवाचिनि करणे वाचि पिषेर्णम् भवति । घृतपेषं पिनष्टि । घृतेन पिनष्टीत्यर्थः । एवं तैलपेषम् । उदपेषम् । पेषमीत्युदकस्योदादेशः ।

## बन्धोऽधिकरणे ॥ २८ ॥

अधिकरणे वाचि बध्नातेर्णम् भवति । चक्रबन्धं बद्धः । चक्रे बद्ध इत्यर्थः । एवं चारकबन्धम् । दृष्टिबन्धम् । गुप्तिबन्धम् । बध्यमानाधारे वाचि णम् भवति न बन्धाधारे । हस्ते बध्नातीति वेत्यधिकाराद्वा न भवति ।

## त्वर्यपादाने ॥ ३७ ॥

त्वरणं त्वरा त्वरीति सौत्रभात्वम् । त्वरायां गम्यमानायां अपादाने वाचि णोर्णम् भवति । शय्योत्थायं धावति । शय्याया उत्थाय । मुखप्रक्षालनाद्यवश्यकार्यं कृत्वा त्वरत इत्यर्थः । एवं स्तनरंभापकर्षं पयः पिबति । स्तनरंभादपकर्षम् । भ्राष्टापकर्षं मयूरान् भक्षयति । भ्राष्ट्रादपकर्षम् । वेत्यनुवर्तनात् शय्याया उत्थाय धावति । त्वरीति किम् । आसनादुत्थाय गच्छति ।

## इपि ॥ २८ ॥

त्वरीति वर्तते । इबन्ते वाचि त्वरायां गम्यमानायां णोर्णम् भवति । यष्टिग्राहं युध्यन्ते । यष्टिं ग्राहम् त्वरया युद्धमहरणमनपेक्ष्य यष्टिमादाय युध्यते इत्यर्थः । एवं पटापकर्षं धावति पटमपकर्षम् । त्वरीत्येव खड्गं गृहीत्वा युध्यन्ते ।

## स्वाङ्गे ध्रुवे ॥ ३९ ॥

इपीति वर्तते । यस्मिन्निवनष्टेऽपि प्राणिनां मरणं न भवति तद्ध्रुवं स्वाङ्गम् । तस्मिन्निबन्ते वाचि णोर्णम् भवति । अक्षिनिकोणं जल्पति । आक्षिणी निकोणम् । भ्रूक्षेपं जल्पति । भ्रुवं क्षेपम् अंगुलिनिकोटं जल्पति । अंगुलिं निकोटं जल्पति । अध्रुव इति किम् । शिर उत्क्षिप्य जल्पति । अद्रवं मूर्तिमत्स्वांगं प्राणिस्थमविकारजम् । अतस्थं तत्र दृष्टं च तेन चेत्तथा युतम् । आद्यैश्चतुर्भिर्विशेषणैर्लालाबुद्धिफलशोकादिरहितप्राणिस्थं वस्तु स्वांगमुक्तम् । अतत्स्थं तत्रदृष्टं चेत्यनेन भूमिपतितकेशादिपरिग्रहः । तेन चेत्तथायुतमित्यनेन काष्ठादिप्रतिमायां स्थितं पाण्यादि संगृहीतम् ।

## सक्लेषे ॥ ४० ॥

इपीति वर्तते स्वांग इति वा । सह क्लेशेन दुःखेन वर्त्तते इति सक्लेशं क्लिश्यमानमित्यर्थः । इवन्ते सक्लेशे स्वाङ्गे वाचि धेोर्णम् भवति । ध्रुवार्थोऽयमारम्भः । उरःप्रतिपेषं युध्यन्ते । उरांसि प्रतिपेषम् । उरांसि पीडयतौ युध्यन्ते इत्यर्थः । एवं शिरःप्रतिपेषम् । शिरांसि प्रतिपेषम् ।

विशिपतिपदिस्कंदो व्याप्यासेव्ययोः ॥ ४१ ॥

इपीति वर्तते । विश्यादिभिः कात्स्र्येन व्यापनीय द्रव्यं व्याप्यम् । क्रियारूपं तात्पर्येण आसेवनीयमासेव्यम् । क्रियाधारभूतमुपचाराद्द्रव्यमप्यासेव्यम् । विशि पति पदि स्कन्द इत्येतेभ्यो धुभ्यः व्याप्ये आसेव्ये च वाचि णम् भवति । गेहानुप्रवेशमास्ते । वृत्या व्यापनस्यासेवनस्य वोक्तत्वात् द्वित्वं न भवति । वाक्यपक्षे व्याप्यमानस्य द्रव्यस्य द्वित्वम् । आसेव्यविवक्षायां तु मुख्यस्यासेव्यस्य क्रियारूपस्य द्वित्वम् । गेहंगेहमनुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेशमास्ते । गेहानुप्रपातमास्ते । गेहंगेहमनुप्रपातम् । गेहमनुप्रपातमनुप्रपातमास्ते । गेहमनुप्रपादमास्ते । गेहंगेहमनुप्रपादम् । गेहमनुप्रपादमनुप्रपादम् । गेहावस्कन्दमास्ते । गेहं गेहमवस्कंदम् । गेहमवस्कदमवस्कंदम् । वेत्यधिकारात् गेहं गेहमनुप्रविश्य गेहमनुप्रविश्यानुप्रविश्यास्ते । वीप्सायामाभीक्ष्ण्ये च द्वित्वम् । व्याप्यासेव्ययोरिति किम् । गेहमनुप्रविश्य भुङ्क्ते । णम् चाभीक्ष्ण्ये इति यद्यप्यासेव्ये णम् सिद्धः । तथापि वाक्यविकल्पार्थमिदम् ।

तृष्यस्वोः क्रियान्तरे काले ॥ ४२ ॥

इपीति वर्तते । इवन्ते कालवाचिनि वाचि तृषि असु इत्येताभ्यां णम् भवति क्रियान्तरार्थे यद्यनुप्रयुज्यमानक्रियापेक्षया क्रियांतरे वृत्तिरित्यर्थः द्व्यहापतर्षं गाः पाययति ।

द्व्यहमपतर्षम् । त्र्यहापतर्षम् । त्र्यहमपतर्षम् । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । त्र्यहमत्यासम् । कालाध्वन्यविच्छेद इतीप् । तृष्यस्वोरिति किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तर इति किम् । अहरत्यस्य गतः । अत्रास्यतिर्न क्रियान्तरे वर्तते किंतु गमावेव । काल इति किम् । पञ्च पूलान् अत्यस्य तिलान् भक्षयति ।

## नाम्न्यादिशिग्रहः ॥ ४३ ॥

इपीति वर्तते । इबन्ते नामशब्दे वाचि आदिशिग्रहिभ्यां णम् भवति । नामादेशमाचष्टे । नामान्यादेशम् । नामग्राहमाकारयति । नामानि ग्राहम् ।

## भावनिष्टोक्तौ कृञः त्काणमौ ॥ ४४ ॥

भिसंज्ञके वाचि अनिष्टोक्तौ गम्यमानायां कृञः त्काणमौ भवतः । वेत्यधिकारात् त्काल्पे सिद्धे पुनः त्काग्रहणं त्क इत्यनेन वृत्तिविकल्पार्थम् । भादीति तत्र वर्तते तेनोत्सर्गो त्काल्पे सविकल्पो न स्यात् । ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषल नीचैःकृत्याचष्टे । नीचैः कृत्वा । नीचैःकारम् । उच्चैर्नाम प्रियमाख्येयम् । नीचैराख्यायमानमनिष्टं भवति । ब्राह्मण कन्या ते गर्भिणी । तर्हि वृषल उच्चैःकृत्याचष्टे । उच्चैःकृत्वा उच्चैःकारम् । कन्यागर्भः उच्चैराख्येयमानो अनिष्टः । अनिष्टोक्ताविति किम् । उच्चैःकृत्याचष्टे पुत्रस्ते जात ।

## तिरश्च्यपवर्गे ॥ ४५ ॥

अपवर्गः समाप्तिः तिर्यच्छब्दे वाचि अपवर्गे गम्यमाने कृञः त्काणमौ भवतः । तिर्यक्कृत्य गतः । तिर्यक्कृत्वा । तिर्यक्कारम् । समाप्य गत इत्यर्थः । अपवर्ग इति किम् । तिर्यक् कृत्वा काष्ठं गतः । तिरश्चीति तिर्यक्शब्दानुकरणनिर्देशः । प्रकृतिवदनुकरणं भवतीति रूपसिद्धिः ।

स्वाङ्गेतस्त्ये कृभुवः ॥ ४६ ॥

तस्त्यो यस्मात्तत्तथोक्तम् । तस्त्ये स्वाङ्गे वाचि कृ भू इत्येताभ्यां त्काणमौ भवतः । भिन्नयोगनिर्दिष्टत्वाद्यथासंख्यमत्र न भवति । मुखतःकृत्य गतः । मुखतः कृत्वा । मुखतःकारम् । पृष्ठतःकृत्य पृष्ठतः कृत्वा । पृष्ठतःकारम् । मुखतोभूय । मुखतोभूत्वा । मुखतोभावम् । पृष्ठतोभूय । पृष्ठतोभूत्वा । पृष्ठतोभावम् । अद्यादानेर्दीयरुहोरिति आदिभ्य उपसंख्यानमिति वा तसिः । स्वाङ्ग इति किम् । सर्वतःकृत्वा । तस्त्यग्रहणं किम् । मुखीकृत्य गतः । त्यग्रहणं किम् । मुख्ये तस्यति मुखयतः अमुखतसं मुखतसं कृत्वा मुखतःकृत्य ।

नाधार्थत्ये च्व्यर्थे ॥ ४७ ॥

नार्थो धार्थश्च त्यो यस्मात्स तथोक्तः । नार्थत्ये धार्थत्ये च शब्दे च्व्यर्थे वाचि कृभू इत्येताभ्यां त्काणमौ भवतः विनाकृत्य गतः । विनाकृत्वा । विनाकारम् । विनाभूय । विना भूत्वा । विनाभावम् । अनाना नाना कृत्य गतः । नानाकृत्वा । नाना कारम् । नानाभूय । नानाभूत्वा । नाना भावम् विनञ्भ्यां नानाञौ नसह इति नानाञौ भवतः । धार्थत्ये अद्विधा द्विधा कृत्य गतः । द्विधाकृत्वा । द्विधाकारम् । द्विधाभूय । द्विधाभूत्वा । द्विधाभावम् । अद्वैधं द्वैधं कृत्य गतः । द्वैधं कृत्वा । द्वैधंकारम् । द्वैध भूय । द्वैधं भूत्वा । द्वैधं भावम् । अद्वेधा द्वेधा कृत्यगतः । द्वेधाकृत्वा । द्वेधाकारम् । द्वेधाभूय । द्वेधाभूत्वा । द्वेधाभावम् । संख्याया विधार्थे धा । द्वित्रेमञ् । एकधा । एकध्यंविधातंअर्थग्रहणं स्वरूपमात्रनिरासार्थम् । त्यग्रहणं किम् । नाधार्थे वाचीत्युच्यमाने इहापि स्यात् । अद्विरुक् द्विरुक्कृत्वा पृथक्कृत्वा च्विर्विकल्पेन विधास्यते ।

धिगत्यर्थाच्चेतिसिद्धे इह सकर्मकार्थमुपादानम् । इदमेव ज्ञापकम् । अकर्मका अपि भवन्ति । आश्लिष्टःकन्यां देवदत्तः । आश्लिष्टा कन्या देवदत्तेन । आश्लिष्टं देवदत्तस्य । अतिशयितो गुरुं भवान् । अतिशयितो भवता गुरुः । अतिशयितं भवतः । उपस्थितो गुरुं भवान् । उपस्थितो भवता गुरुः । उपस्थितं भवतः । उपासितो गुरुं भवान् । उपासितो भवता गुरुः । उपासितं भवतः । अनूषितो गुरुं भवान् । अनूषितो भवता गुरुः । अनूषितं भवतः । अनुजातो माणवको माणविकाम् । अनुजाता माणविका माणवकेण । अनुजातं माणवकस्य । आरूढो वृक्षं देवदत्तः । आरूढो वृक्षो देवदत्तेन । आरूढं देवदत्तस्य । अनुजीर्णो वृषलीं देवदत्तः । अनुजीर्णा वृषली देवदत्तेन । अनुजीर्णं देवदत्तस्य । रुहेरगत्यर्थत्वादन्यदपि गत्यर्थकार्यं न भवति । आरोहयति वृक्षं देवदत्तेन । कर्मसंज्ञा न भवति ।

## धिगत्यर्थाच्च ॥ ५८ ॥

धिसंज्ञेभ्यः गत्यर्थेभ्यश्च धुभ्यः क्तस्त्यः कर्तरि भवति यथाप्राप्तं च । आसितो भवान् । आसितं भवता । शयितो भवान् । शयितं भवता । गत्यर्थेभ्यः गतो भवान् ग्रामम् । गतो भवता ग्रामः । गतं भवता । यातो भवान् । यातो भवता ग्रामः । यातं भवता । कालभावाध्वभिः कर्मभिः सकर्मकवद्भवति ॥ तत्करणात् स्वाश्रयमपि भवति । अतस्त्रैरूप्यम् । सुप्तो भवान् मासम् । सुप्तो भवता मासः । सुप्तं भवता मासम् । ओदनपाकं सुप्तो भवान् । ओदनपाकः सुप्तो भवता । ओदनपाकं सुप्तं भवता । क्रोशं सुप्तो भवान् । क्रोशः सुप्तो भवता । क्रोशं सुप्तं भवता ।

## अधिकरणे चाद्यर्थाञ्च ॥ ५८ ॥

क्त इति वर्तते अद्यर्था अभ्यवहारार्थाः । अद्यर्थेभ्यो धिगत्यर्थेभ्यश्च क्तोऽधिकरणे भवति कर्तरि वाकर्मणि । यथाप्राप्तं च कर्तृकर्मभावेषु अद्यर्थेभ्यः अधिकरणकर्मभावेषु क्तः अधिकरणे अस्मिन्निमे भुञ्जते स्म इदमेषां भुक्तम् । इदमेषां पीतम् । क्तस्याधिकरण इति कर्तरि ता । कर्मणि एभिर्भुक्त ओदनः । एभिः पीतं मधु । भावे भुक्तं एभिः । पीतमेभिः । धिभ्यः अधिकरणकर्तृभावेषु क्तः अधिकरणे इदमेषामासितम् । आसितो भवान् । आसितं भवता । गत्यर्थेभ्यः अधिकरणकर्तृकर्मभावेषु क्तः अधिकरणे इदमेषां यातम् । यातो देवदत्तो ग्रामम् । यातो देवदत्तेन ग्रामः । यातं देवदत्तेन । इह विभुक्ताः भ्रातरः पीता गावः इति मत्वर्थीयोऽकारः ।

## दासगोघ्नौ संप्रदाने ॥ ६० ॥

दासगोघ्न इत्येतौ शब्दौ निपात्येते संप्रदाने कारके दासन्ति तस्मै दासः । गां हन्ति अस्मै आगताय गोघ्नोऽतिथिः । टगत्र निपात्यः । स्त्रियां गोघ्नी देवदत्ता ।

## भीमादयोऽपादाने ॥ ६१ ॥

भीमादयः शब्दाः अपादाने कारके ज्ञातव्याः । भीमादयः शब्दा अन्यत्र साधिताः कारकनियमार्थमिह तेषां पाठः । बिभेत्यस्मादिति भीमः । भीष्मः । भयानकः । चरुः । प्रस्कन्दनम् । प्रपतनम् । समुद्रवन्त्यस्मात् समुद्रः । स्रुवः । स्रुक् । भृष्टिः । रक्षा । संकसंति तस्मात् संकसुकः । खलिनः ।

## उणादयोऽन्यत्राभ्याम् ॥ ६२ ॥

उणादयस्तया आभ्यां संप्रदानापादानाभ्यामन्येषु कारकेषु भवन्ति । करोतीति कारुः । वृश्चति तं वृक्षः । कषितो

ऽसौ कषिः । ततोऽसौ तन्तुः । वृत्तं तत्र वर्त्म । चरितं तत्रेति चर्म । भसितं तत्रेति भस्म । ऋचन्ति तया ऋक् ।

लस्य ॥ ६३ ॥

अकार उच्चारणार्थः । लस्येत्ययमधिकारः । यदित ऊर्द्धमनुक्रमिष्यामः लस्य स्थाने तद्बेदितव्यम् । नव लकाराः पञ्च टितश्चत्वारो ङितः लट् लिट् लुट् लृट् लोट् लङ् लिङ् लुङ् लृङ् एषामनुबन्धापायेन लकारमात्रं स्थानित्वेनाधिक्रियते । त्य इति वर्तते । धोरिति च । धोर्विहितस्य त्यस्य लकारस्य ग्रहणात् लभते चूडाल इत्येवमादि परिहृतम् ।

मिब्वस्मस्सिप्थस्थतिप्तस्झीड्वहिमहियाथा-थांध्वंतातांझङ् ॥ ६४ ॥

लस्य स्थाने मिबादयः आदेशा भवन्ति । पकारः गोऽपिदिति विशेषणार्थः । इटष्टकारोऽरब्जक्रेट इति विशेषणार्थः । झङो ङकारः प्रत्याहारार्थः । पचामि । पचावः । पचामः । पचसि । पचथः । पचथ । पचति । पचतः । पचन्ति । टितां द्विषये आदेशान्तराणि वक्ष्यन्ते । लिटो मानां णलादयः आदेशाः वक्ष्यन्ते । लुट् पक्तास्मि । पक्तास्वः । पक्तास्मः । इत्येवमादि ज्ञेयम् । लृट् पक्ष्यामि । पक्ष्यावः । पक्ष्यामः । लोट आदेशाः वक्ष्यन्ते ङितां लकाराणां मविषये च इह तानुदाहरिष्यामः । लङ् । अपचे । अपचावहि । अपचामहि । वक्ष्यते लिङ । लुङ् । अपक्षि । अपक्ष्वहि । अपक्ष्महि । लृङ् । अपक्ष्ये । अपक्ष्यावहि । अपक्ष्यामहि ।

टिद्वटेरे ॥ ६४ ॥

टितां लकाराणां ये दास्तेषां टेरेत्वं भवति । यत्र एक एवाच् तत्र व्यपदेशिवद्भावाददन्तत्वमुक्तम् । यत्र च तदादिरन्ये

नास्ति तत्रापि व्यपदेशिवद्भावात्तदादित्वम् । पचे । पचावहे । पचामहे । थासःसे इति वक्ष्यति। पचसे । पचेथे। पचध्वे। पचते। पचेते। पचन्ते । लिट्। पेचे। पेचिवहे । पेचिमहे। लुट्। पक्ताहे। पक्तास्वहे । पक्तास्महे । लृट् । पक्ष्ये। पक्ष्यावहे । पक्ष्यामहे । लोटो वक्ष्यति प्रकृतानां मिङां टस्य टेरेत्वम् । तेनेह न भवति पचान इति ।

थासः से ॥ ६५ ॥

टिद्ग्रहणमनुवर्तते । टितो लकारस्य थासः स इत्ययमादेशो भवति । पचसे । पेचिषे पक्तासे । पक्ष्यसे । एशिरेसेविधानेषु किं स्यादित्वे प्रयोजनम् । आदेशे तु कृते मा भूत् ज्ञापकं भवितादिषु ।

लिटस्तझयोरेशिरे ॥ ६६ ॥

लिटादेशयोस्त झ इत्येतयोः एश् इरे इत्येतावादेशौ भवतः । शकारः सर्वादेशार्थः परस्यादिर्मा भूत् । पेचे । पेचिरे। नेमे । नेमिरे ।

मानां णलवमथायुसणलतुसुसः ॥ ६७ ॥

लिट इति वर्तते । लिटो मानां स्थाने यथासंख्यं णलादयो नव आदेशा भवन्ति । णकारः ऐवर्थः । लकारः सर्वादेशार्थः । अ इति द्वयोरकारयोः प्रश्लेषनिर्देशः सर्वादेशार्थः । अल्पस्याकारस्याकारवचने प्रयोजनाभावात् सर्वादेश इति चेत् समसंख्यत्वं प्रयोजनं संभाव्येत । अथवा घेरिति कानिर्देशात् परस्यादेः थकारस्याकारः । पपाच । पेचिव पेचिम । पपक्थ । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः । येचोपदेशः इत्यादिना वेट् । सेटीति एत्वं च । वमयोः क्र्यादिभिर्नियमादिट् ।

विदो लटो वा ॥ ६८ ॥

मानामिति वर्तते । वेत्तेरुत्तरेषां लटो मानां स्थाने वा णलादयो भवन्ति । वेद । विद्व । विद्म । वेत्थ । विदथुः । विद । वेद । विदतुः । विदुः । न च भवन्ति । वेद्मि । विद्वः । विद्मः । वेत्सि । वित्थः । वित्थ । वेत्ति । वित्तः । विदन्ति । विदेरिति कानिर्देशात् ज्ञानार्थस्य ग्रहणं लाभार्थस्य शेन व्यवधानात् ।

ब्रुव आहश्च ॥ ६९ ॥

मानामिति वर्तते । लटो वेति वर्तते । ब्रुव उत्तरस्य लटो मानां वा णलादयो भवन्ति । तत्सन्नियोगे ब्रुव आहादेशः । अकार उच्चारणार्थः । तथास्मद् इत्युत्तरत्र प्रतिषेधात् अत्र पञ्च ग्रहणम् । आत्थ । आहथुः । आह । आहतुः । आहुः । सिपस्थे कृते आहस्थ इति हकारस्य थकारः । खरीति चर्त्वम् । यद्यत्र स्थानिवद्भावात् ब्रुव ईडिति ईट् स्यात् झलादिप्रकरणे आहस्थ इति वचनमनर्थकं स्यात् । न च भवति । ब्रवीषि । ब्रूथः । ब्रवीति । ब्रूतः । ब्रुवन्ति ।

न थास्मदः ॥ ७० ॥

ब्रूञः परस्य थस्यास्मदश्च पूर्वोक्ता आदेशा न भवन्ति । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः ।

लोटो लङ्वत् ॥ ७१ ॥

लोटो लङ इव कार्यं भवति । लोडादेशानां लङादेशानामिव कार्यमतिदिश्यते इत्यर्थः । पचाव । पचाम । ङितः सखं सिद्धम् । पचतम् । पचत । पचताम् मिप्थस्थतसामृतंतामेतेत सिद्धम् । एरुरिति उकारः पुरस्तादपवादन्यायेन एर्मइति इखमेव बाधते न जुसादेशम् । एवं च यथा अदुः अधुरिति

भवति तथा यान्तु पान्तु इत्यत्रापि जुसादेशः प्राप्नोति नैष दोषः वक्ष्यते आत लङो वेत्यत्र लङ् ग्रहणस्य प्रयोजनं लङेव यो लङ् तस्य जुस् भवति अतिदेशेन यो लङ् तस्य मा भूत् लङव-दिति तांतादृत् तेनाडागमो न भवति ।

एरुः ॥ ७२ ॥

लोट इति वर्तते । मानामिति च । लोटो मानामिका-रस्य उकारादेशो भवति । इखस्यापवादः । पचतु । पचन्तु । करोतु । कुर्वन्तु । मिप्सिपोरादेशान्तरमुत्वस्य बाधकं वक्ष्यते ।

सेर्ह्यपिच्च ॥ ७३ ॥

लोट इति वर्तते । सेर्हिरादेशो भवति अपिच्च । लुनीहि । आप्नुहि । राध्नुहि ।

मेर्निः ॥ ७४ ॥

लोटो मेर्निरित्ययमादेशो भवति । पचानि । क-रवाणि ।

आमेतः ॥ ७५ ॥

लोट इति वर्तते । लोडादेशस्थ एकारः तस्य आमि-त्ययमादेशो भवति । निर्दिश्यमानस्यादेशो भवति । पचेथाम् । पचताम् । पचेताम् । पचन्ताम् ।

स्वोवामौ ॥ ७६ ॥

लोट इति वर्तते एत इति च । सकारवकाराभ्यां परस्य एत अम् इत्येतावादेशौ भवतः । पचस्व । पचध्वम् । वयस्व । वयध्वम् ।

पिच्चाडस्मदः ॥ ७७ ॥

लोट इति वर्तते । लोटोऽस्मदः आडागमो भवति

पिच्च । करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ।

एत ऐ ॥ ७८ ॥

लोटोऽस्मद् इति वर्तते । लोटोऽस्मदः एकारस्यैकारादेशो भवति । निर्दिश्यमानस्यादेशोऽयमत्सोपवादः । करवै । करवावहै । करवामहै । चिनवै । चिनवावहै । चिनवामहै ।

ङितः सखम् ॥ ७९ ॥

अस्मद् इत्येव । ङितो लकारस्य योस्मत्तस्य सखं भवति । लङ् । अपचाव । अपचाम । लिङ् । पचेव । लुङ् । अपाक्ष्व । अपाक्ष्म । लृङ् । अपक्ष्याव । अपक्ष्याम ।

एर्मे ॥ ८० ॥

ङित इति वर्तते ङिल्लकारसम्बन्धिन इकारस्य खं भवति मविषये । लङ् । अपचः । अपचत् । अपचन् । लिङ् । पचेरन् । पचेत् । लुङ् । अपाक्षीः । अपाक्षीत् । लृङ् । अपक्ष्यः । अपक्ष्यत । अपक्ष्यन् । म इति किम् । अपचावहि । अपचामहि ।

मिप्थस्थतसोऽम्तंतताम् ॥ ८१ ॥

. ङितां लकाराणां मिप् थस् थ तस् इत्येतेषां यथासंख्यं अम् तं त ताम् इत्येते आदेशा भवन्ति । अपचम् । अपचतम् । अपचतम् । अपचताम् । लिङ् । पचेयम् । पचेतम् । पचेत । पचेताम् । लुङ् । अपाक्षम् । अपाक्तम् । अपाक्त । अपाक्ताम् । वदव्रजेत्यादिनैप् । झलो झलीति सखम् । लृङ् अपक्ष्यम् । अपक्ष्यतम् अपक्ष्यत । अपक्ष्यताम् ।

लिङः सीयुट् ॥ ८२ ॥

लिङादेशानां सीयुडागमो भवति । मेयासुटो विधानाट्टे सीयुट् द्रष्टव्यः । टकारः टिदादिरिति विशेषणार्थः । उकार

उच्चारणार्थः । पचेय । पचेवहि । पचेमहि । पचेथाः । पचेयाथाम् । पचेध्वम् । पचेत । पचेयाताम् । पचेरन् । रुदादेर्ग इति वर्तमाने लिङोऽनन्त्यसखमिति सीयुट्सकारस्य सुट्तयोरिति सुट्सकारस्य च खम् । आशिषि लिङ् । पक्षीय । पक्षीवहि । पक्षीमहि । पक्षीष्ठाः । पक्षीयास्थाम् । पक्षीध्वम् । पक्षीष्ट । पक्षीयास्ताम् । पक्षीरन् ।

## यासुण् भो ङित् ॥ ८३ ॥

लिङ इति वर्तते । लिङो मविषयस्य यासुडागमो भवति ङिच्च । सीयुटोऽपवादोऽयम् । अत्र किदाशिषीति वचनात् विध्यादिलक्षणस्य लिङ इहोदाहरणम् । कुर्याम् । कुर्याव । कुर्याम । कुर्याः । कुर्यातम् । कुर्यात । कुर्यात् । कुर्याताम् । कुर्युः । कृञो ये च इति विकरणस्य खम् । झेर्जुसीति जुस् उसीति पररूपम् । स्थानिवद्भावादेव लिङादेशस्य ङित्वे सिद्धे यासुटो ङिद्वचनं ज्ञापकं लकाराश्रयमादेशानां ङित्वं टित्वं च न भवति तेन अचिनवमित्येप् सिद्धः । पचमाना स्त्री टित इति ङीत्यो न भवति ।

## किदाशिषि ॥ ८४ ॥

आशिषि लिङो यासुट् किद्भवति । ङित्वे प्राप्ते कित्वं विधीयते । ज्यर्थं जागर्तेरेबर्थं च । उच्यासम् । उच्यास्व । उच्यास्म । उच्याः । उच्यास्तम् । उच्यास्त । उच्यात् । उच्यास्ताम् । उच्यासुः । जागर्यासम् । जागर्यास्व । जागर्यास्म । जागुरविजिणलिङतीत्येप् ।

## रन्नझ्झेटः ॥ ८५ ॥

लिङादेशयोर्झ इट् इत्येतयोर्यथासंख्यं रन् अत इत्येतावादेशौ भवतः । पचेरन् । पक्षीरन् । झोन्तइत्यस्यायमपवादोऽयम् । पक्षीय । क्षीयाशीः प्रैषेषुमिङाकांक्षमित्येवमादिना प्राप्तस्य पस्य निवृत्त्यर्थं तपरकरणम् ।

सुट् तथोः ॥ ८६ ॥

लिङो यौ तकारथकारौ तयोः सुडागमो भवति । अग-विषये लिङ् प्रयोजयति । गे सखेन भवितव्यम् । पक्षीष्ठाः । पक्षीयास्थाम् । पक्षीष्ट । पक्षीयास्ताम् ।

झेर्जुस् ॥ ८७ ॥

लिङादेशस्य झेर्जुसित्ययमादेशो भवति । अन्तादेशापवादः । कुर्युः । क्रियासुः । निर्दिश्यमानस्यादेशो न यासुटः ।

थवित्सेः ॥ ८८ ॥

थसंज्ञकवेत्तिसि इत्येतेभ्यः परस्य झेर्जुसादेशो भवति । ङित इति वर्तते । तत्र लिङ आदेश उक्तः । लङः स्येन व्यवधानमस्ति लुङोपि सेरिति भविष्यति पारिशेष्यात्थविद्ग्रहणं लङर्थम् । अबिभरुः । अजागरुः । वसीत्येप् । विदेः । अविदुः । अकार्षुः । अहार्षुः ।

आतः ॥ ८९ ॥

सेरिति वर्तते । आकारान्तात्सेः परस्य झेर्जुस् भवति । श्रुतिकृतं झेरातः परत्वं सेरुपि कृते त्याश्रयलक्षणेन सेः परत्वं अत उभयगतमानन्तर्यं झेरस्ति । अस्थुः । अगुः । अयुः । अदुः । अधुः । त्याश्रयलक्षणेन झेरिति पूर्वेणैव सिद्धे नियमार्थमेतत् । अत एव सेरुपि कृते नान्यस्मात् अभूवन्निति ।

लङो वा ॥ ९० ॥

आत इति वर्तते । आकारान्तात्परस्य लङादेशस्य झेर्वा जुस् भवति । अयुः । अयान् । अधुः । अधान् । ननु लङ्ग्रहणमनर्थकम् । ङित इति वर्तते । पारिशेष्यात् लङ एव संप्रत्ययः नानर्थकम् इह लङेव यो लङ् तस्य झेर्जुस् भवति ।

अतिदेशे मा भूत् । यान्तु । वान्तु । श्नवित्सेरित्यनेनापि मुख्यस्य लङो ग्रहणादिह न भवति । बिभ्यतु । जाग्रतु । विदन्तु ।

द्विषः ॥ ८१ ॥

लङो वेति वर्तते । द्विषः परस्य लङो झेर्वा जुस् भवति । अद्विषुः । अद्विषन् । अनिगन्तत्वाज्जुसीत्येप्न भवति ।

मिङ्शिद्गः ॥ ८२ ॥

मिङ् शितश्च त्या धोर्विहिताः गसंज्ञा भवन्ति । भूयते । नयति । रोदिति । शित् । पचमानः । गसंज्ञाश्रयो विकरण एप् भवति ।

शेषोऽग एव ॥ ८३ ॥

मिङ्शिद्भ्यामन्यः शेषः । धोरित्येवं विहितस्य शेषः अगसंज्ञ एव भवति । लविता । लवितुम् । लवितव्यम् । अगसंज्ञाकार्यमिडागम एप् च । धोरिति विशेषणं किम् । जुगुप्सते । श्रीकाम्यति । लूभ्याम् । अग्नित्वम् । एवकार उत्तरार्थः । अगप्रदेशाः । वलाद्यगस्येटगागयोरित्येवमादयः ।

लिट् ॥ ८४ ॥

एवशब्दोऽनुवर्तते । लिडादेशो मिङ् अगसंज्ञ एव भवति । पेचिथ । शेकिथ । वोपदेशइत्यादिनेट् । सेटीत्येवच खम् । गसंज्ञासमावेशनिवृत्त्यर्थमेवकारोऽभिसंबध्यते । तेरिम इत्यत्र गसंज्ञायामसत्यां तदाश्रयः शप् न भवति ।

लिङाशिषि ॥ ८५ ॥

एवेति वर्तते । आशिषि यो लिङ् तदादेशश्चागसंज्ञ एव भवति । भावे जागरिषीष्ट । कर्मणि लविषीष्ट । अगसंज्ञायां

गाश्रयं लिङोऽनन्त्यसखमिति सखं न भवति । एवकाराधिकारात् गसंज्ञासमावेशो न भवति । यदि स्याद्युक् प्रसज्येत । आशिषीति किम् । जागृयात् । जागृयाताम् । जागृयुः ।

इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ
द्वितीयस्याध्यायस्य चतुर्थः पादः समाप्तः ।
समाप्तश्च द्वितीयोऽध्यायः ।



यत्किञ्चिद्वाङ्मयं लोके सान्वयं संप्रतीयते ।
तत् सर्वं धातुभिर्व्याप्तं शरीरमिव धातुभिः ।

**दाम्नीशसयुयुजस्तुतुदसिसिचमिह पतदशनहः करणे त्रट् ॥ १६० ॥**

दाप् लवन इत्येवमादिभ्यः करणे कारके त्रट् भवति । दान्ति तेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । अजादिषु पाठाट्टाप् । नध्री । दंशेः कृतनखस्यनिर्देशो ज्ञापकः क्वचिदन्यत्रापि नखम् । दशनः ।

**धात्रपोत्रे ॥ १६१ ॥**

धात्रपोत्रइत्येते शब्दरूपे निपात्येते । धेटः कर्म्मणि त्रट् निपात्यते । धयंति तामिति धात्री । पोत्रमिति पुनातेः पवतेर्वा करणे त्रट् निपात्यते । हलस्य सूकरस्य वा मुखं चेद्भवति हलस्य पोत्रम् । सूकरस्य पोत्रम् ।

**लूधूसूखनर्तिसहचर इत्रः ॥ १६२ ॥**

करण इति वर्तते । ल्वादिभ्यो धुभ्यः करणे इत्रो भवति । लुनाति तेन लवित्रम् । धुवति तेन धवित्रम् । सुवति तेन सवित्रम् । खनित्रम् । अरित्रम् । सहित्रम् । चरित्रम् ।

**पुवः खौ ॥ १६३ ॥**

करण इति वर्तते । पवतेः पुनातेर्वा करणे इत्रो भवति खुविषये । पूयतेऽनेन पवित्रम् । पवित्रा नाम नदी ।

**कर्तरि चर्षिदेवतयोः ॥ १६४ ॥**

पुव इत्रो भवनि कर्तरि करणे च कारके । ऋषिदेवतयोरभिधेययोभिन्नयोगनिर्दष्टत्वाद्यथासंख्यं न भवति

पूयतेऽनेन पुनाति वा पवित्रो ऽयमृषिः । देवतायां पवित्रोऽर्हन् स मा पुनातु ।

ञीतः क्तः १ १६५ ॥

संप्रतीति वर्तते ञिशब्देतो धोः संप्रति क्तो भवति। ञिमिदा मिन्नः । ञिधृषा । धृष्टः । ञिक्ष्विदा । क्ष्विण्णः ।

मतिबुद्धिपूजार्थाच्च ॥ १३६ ॥

मतिरनुमतिः । बुद्धिर्ज्ञानम् । पूजा अर्चा । मत्यर्थेभ्यः पूजार्थेभ्यश्च धुभ्यः संप्रति क्तो भवति । राज्ञां मतः । राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । राज्ञां पूजितः । राज्ञामर्चितः । क्तयोगे कर्तरि ता प्राप्ता नङ्कितेत्यादिना प्रतिषिद्धा भवतीत्यनेन पुनर्विधीयते। चकारोऽनुक्तसमुच्चयार्थः ।

शीलितो रक्षितः क्षांतः आक्रुष्टो जुष्ट इत्यपि ।
रूष्टश्च रुषितश्चोभौ अभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा कान्तः दयितोन्यः संयतोद्यतौ ।
कष्टभविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥

अमृतशब्दः संप्रति ववहुत्वनिर्देशात् । सुप्तः शयितः स्थितः आसित इत्येवमादयोऽपि संप्रति वोद्धव्याः ।

उणादयो बहुलम् ॥ १६७ ॥

पूर्वः स्वावित्यतो मण्डूकप्लुत्या खाविति वर्तते उण इत्येवमादयस्त्याः संप्रति ध्वर्थे बहुलं भवन्ति । खुविषये कचित्यसंज्ञा भवति । कृवापाजिमिस्वदिसाध्यशूभ्य उण् । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः कचित्यसंज्ञा न भवति । कृधुभ्य-

क्सरः । कृसरः । धूसरः त्यसंज्ञाविरहात्यादेशयोरिति षत्वं न भवति । इह च शंखः शंठः इति इरा न भवति । क्वचिदुभयथा । नृदवदिहनिकमिकासिभ्यः सः । वसम् । तसम् । एपम्प्रति त्यसंज्ञा षत्वं प्रति नास्ति । इह च षण्ड इति प्रकृतिकार्यं ध्वादिसत्वं न भवति । उक्तं च ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।

विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

तथा अनुक्ताभ्योपि प्रकृतिभ्यस्त्या भवन्ति । अण्डः जृकृसृवृङ्भ्यः जरण्डः । करण्डः । सरण्डः । वरण्डः । आडिई-तैरपीष्यते एरण्डः । अनुक्ता अपि त्या भवन्ति झफिडः झफण्डः इत्येवमादिषु । तथा संप्रतिकाले उणादयो विहिताः क्वचिद्भूतेऽपि दृश्यन्ते· कषितोऽसौ कषिः । ततोऽसौ तन्तिः । भसितं भस्म । चरितं चर्म्म । वृत्तं तदिति वर्त्म । तदुक्तं बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायससुच्चयनादपि तेषां कार्यसशेषविधश्च तदुक्तं नैगमरूढभवं हि सुसाधु जात्यपेक्षयैकत्वं तनुदृष्टेरिति प्यखे-कर्म्मणि का तनुदृष्टिं वीक्ष्य तनुदृष्टेः प्रकृतेस्तनोर्गुणस्य दर्शनादित्यर्थः । तद्बाहुलकमुक्तम् । एवं हि नैगमाः गौरित्येवमादयः रूढिभवाः पलाश इत्येवमादयः शब्दा सुसाधवो भवन्ति ।

इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ * ॥

ॐ नमः ॥

## गम्यादिर्वर्त्स्यति ॥ १ ॥

उणादयो अन्यत्र च ये साधिता गम्यादयः शब्दास्ते च वर्त्स्यति काले साधवो भवन्ति वर्त्स्यतीत्यनागतस्य कालस्य सामान्येन ग्रहणं संप्रत्त्यादिकाले तेषां साधुत्वव्यवच्छेदार्थ आरम्भः । गमिष्यति गमी ग्रामम् । आगमिष्यति आगमी नगरम् । आधमर्ण्ये येन इति कर्म्मणि ताथाः प्रतिषेधात् कर्म्मणाथाति इवेष भवति । एवं भविष्यति भावी । प्रस्थास्यते प्रस्थायी । प्रतिभोत्स्यते प्रतिबोधी । प्रतियोक्ष्यते प्रतियोगी । प्रयास्यति प्रयायी । गमेरिन्निति इन् । स एव आङि णिदिति णिन् । भुवश्चेति भवतेरपि णिन् । अन्येभ्यः सुपि शीले जातौ णिनिति णिन् । कथं श्वागमी ग्रामं अनद्यतने लुङिति लुङ्प्राप्तेः तदसद्यतो वर्त्स्यतीत्यनेन सामान्यशब्देनानद्यतनविशेषोप्यगृहीतो यथा गौरित्यनेन खण्डमुण्डोपि अतो वर्त्स्यतीत्यविशेषणवृत्तावप्यर्थकरणादेर्विशेषप्रतिपत्तिः । अथवा अनद्यतने लुङित्यत्र गम्यादिर्वर्त्स्यतीत्येतदनुवर्तिष्यते तेनानद्यतनविषयेपि गम्यादयः सिद्धा भवन्ति असमाद्वा अनद्यतने भवन्ति । लुङ्लृटावपि भवतो गमिष्यति गन्तेति ॥

## पुरायावतोर्लट् ॥ २ ॥

पुरा च यावच्च पुरायावतौ तयोः पुरायावच्छब्दयोर्वाचोर्वर्त्स्यतिधोर्लट् भवति । पुरा भुङ्क्ते । यावदधीते । भविष्यदनद्यतने लृटोऽयमपवादो लट् । लङपि लृडपवादः तत्रापवादयोः स्पर्द्धे परत्वाल्लुट् प्राप्तः पूर्वनिर्णयेन लट्

भवति । श्वः पुरा ऽधीते । श्वो यावदधीते । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येत्यभिधानात् । तेनेह न भवति । यावद्दास्यति तावद्भोक्ष्यते महत्या पुरा जेष्यति ॥

वा कदाकर्ह्योः ॥ ३ ॥

कदा कर्हि इत्येतयोर्वाचोर्वर्त्स्यतिधोर्वा लट् भवति । कदा भुङ्क्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भोक्ष्यते । कर्हि भोक्ता ॥

किंवृत्ते लिप्सायाम् ॥ ४ ॥

किमो वर्तनं किंवृत्तं तस्मिन् वाचि लिप्सायां गम्यमानायां वर्त्स्यति वा लट् भवति । लुटि लृटि च प्राप्ते अयमारम्भः लब्धुमिच्छा लिप्सा प्रार्थनाभिलाषः को भवद्भ्यो भिक्षां ददाति । को भवद्भ्यो भिक्षां दास्यति । को भवद्भ्यो भिक्षां दाता । इह कस्मान्न भवति । कदा भोजयिष्यसि भोजयितासि वा । किमो हि विभक्त्यन्तस्य डतरडतमान्तस्य च वर्तनं किंवृत्तमिति वैयाकरणानामभिप्रायः । तच्चेह नास्ति ततोऽत्र लटोभावात् लृड्लुटावेव भवतः । लिप्सायामिति किम् । कः पाटलिपुत्रं यास्यति ।

लिप्स्यसिद्धौ ॥ ५ ॥

वर्त्स्यतीत्यनुवर्तते लिप्सति हि लिप्स्यो दाता ओदनादिश्च तत्र दातरि तासो लिप्स्यस्य सिद्धिः लिप्स्यसिद्धिःयाचकेन हि यो लिप्स्यते दाता तस्य सिद्धौ स्वर्गादिफलप्राप्तौ ओदनादौ तु भासः । याचकेन हि यो लिप्स्यते ओदनादिना करणभूतेन सिद्धिः दातुः स्वर्गादिफलप्राप्तिः तस्यां गम्यमानायां वर्त्स्यति वा

लट् भवति । यो भवद्भ्यो भिक्षां ददाति दाता वा स स्वर्गलोकं गच्छति गमिष्यति गन्ता वा । दानाद्दातुः स्वर्गसिद्धिं ब्रुवाणो दातारमेवमुत्साहयति । ननु चात्र उभयत्रापि लिप्साया गम्यमानत्वात् किंवृत्ते लिप्सायामित्येव लट्विकल्पसिद्धेर्व्यर्थोऽयमारम्भः । न व्यर्थः किंवृत्तार्थत्वादेतदारम्भस्य । पूर्वेण हि किंवृत्ते वाचि लट्विकल्पो विहितः ।

## लोडर्थलक्षणे ॥ ६ ॥

वत्स्यतीति वेति च वर्तते । लोडर्थः प्रैषादिः स लक्ष्यते अनेन लोडर्थलक्षणं तस्मिन् लोडर्थलक्षणे ध्वर्थे वर्तमानात् धोर्वत्स्यति वा लट् भवति उपाध्यायश्चेदागमिष्यति । उपाध्यायश्चेदागन्ता । अथ त्वं तर्कमधीष्व अथ गणितमधीष्व। अत्रोपाध्यायागमनेन प्रैषो लक्ष्यते ।

## लिङ् चोर्द्ध्वमौहूर्तिके ॥ ७ ॥

वेति वर्तते । लोडर्थलक्षण इति । ऊर्द्ध्वं मुहूर्ताद्भव काल ऊर्द्ध्वमौहूर्तिकः निपातनात्सविधिरुत्तरपदस्यैप् ऊर्द्ध्वमौहूर्तिके वत्स्यति काले लोडर्थलक्षणे वर्तमानाद्धोर्लिङ् भवति लड् वा । ऊर्द्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् उपाध्यायश्चेदागच्छति उपाध्यायश्चेदागमिष्यति उपाध्यायश्चेदागन्ता अथ त्वं तर्कमधीष्व अथ त्वं गणितमधीष्व ।

## वुणतुमौ क्रियायां तदर्थायाम् ॥ ८ ॥

वत्स्यतीत्येव वर्तते । यस्माद्धोः स्योत्पत्तिः प्रार्थ्यते तद्वाच्यक्रिया तच्छब्देनाभिप्रेता सा क्रिया अर्थः

प्रयोजनं यस्या व्रजनादिक्रियायाः सा तदर्था तस्यां वाचि वत्स्यति काले वुरातुमौ भवतः । कारको व्रजति । कर्तुं व्रजति । भोजको व्रजति । भोक्तुं व्रजति । क्रियायामिति किम् । भिक्षिष्ये इत्यस्य जटाः । अध्येष्ये इत्यस्य कमण्डलुः । द्रव्यमत्र तदर्थम् । तदर्थायामिति किम् । धावतस्ते पतिष्यति दण्डः । नात्र धावनं दण्डपतनार्थम् । ननु सामान्यविहितेन एवुना सिद्धं किमर्थं वुण्विधीयते भिकृते भान्तो भवतीति भिन्नविषयत्वात्तुमपि न वाधकः क्रियायां तदर्थायां वाचि लृड् वक्ष्यते स बाधकः स्यात् वासमविधिना ण्वुर्भविष्यतीति चेत् एवं तर्हि नियमार्थं वुण्वचनं वत्स्यति क्रियायां तदर्थायां वाचि वुणेव यथा स्यात् तृजादयो मा भूवन् इति कर्ता व्रजति विकिरो व्रजति इत्येवमादि न भवति ॥

## भाववाचिनः ॥ ९ ॥

भाववाचिनो घञादयः ते वत्स्यति काले क्रियायां तदर्थायां वाचि भवन्ति । यद्यपि सामान्येन विहिता घञादयस्तथापि वुराग्रहणं ज्ञापकमुक्तं सामान्यविहितास्त्याः वत्स्यति काले क्रियायां तदर्थायां न भवन्तीति तुमा च बाध्येरन् । तेनायं यत्नः । पाकाय व्रजति । मतये व्रजति । पुष्टये व्रजति । तुमर्थाद् भाव इत्यप् । भाव इति किम् । षणे न । वाचि ग्रहणं किमर्थम् । यकाभ्यः प्रकृतिभ्यो येन विशेषणेन त्या विहितास्ताभ्यः प्रकृतिभ्यो तेन विशेषणेन क्रियायां तदर्थायां वाचि यथा स्युरित्येवमर्थम् ॥

## कर्म्मणि चाण् ॥ १० ॥

कर्म्मणि वाचि तदर्थायां च क्रियायामण् भवति । पूर्वेण वुण्प्राप्तः । वाऽसमविधिश्च नास्तीत्युक्तम् एन् स्यात् तेनायमारम्भः । कुम्भकारो व्रजति । काण्डलावो व्रजति । वाचि ग्रहणानुवृत्तेः यथाविहितमण् भवति इति कर्म्मण्येव वाचि भविष्यति । कर्म्मग्रहणं किमर्थम् अपवादविषयेऽपि यथा स्यादित्येवमर्थः । गोदायो व्रजति । तुषपायी व्रजति । क्रियायां तदर्थायामनुवर्तते । चकारः किमर्थः केवले कर्म्मणि केवलायां च क्रियायां वाचि मा भूत् । प्रत्येकमीपा निर्देशात् वाक्सः ।

## लृट् ॥ ११ ॥

लट् भवति क्रियायां तदर्थायां वाचि । करिष्यामीति व्रजति । उदाहरणे इति शब्दः हेतुहेतुमद्भावद्योतनार्थः ।

## शेषे ॥ १२ ॥

उक्तादन्यः शेषः शुद्धं वर्त्स्यत् कालमात्रं शेषे वर्त्स्यति लट् भवति । करिष्यति । हरिष्यति ॥

## विभाषा लृटः सत् ॥ १३ ॥

वर्त्स्यति लृट् तस्य स्थाने सत्संज्ञौ शतृशानौ विभाषया भवतः। पक्ष्यन्तं पश्य । पक्ष्यमानं पश्य । पक्ष्यता कृतम् हेपक्ष्यन् । हे पक्ष्यमाण । अर्जयिष्यति वसति । अध्येष्यमाण आस्ते । देवदत्तः पश्यति पक्ष्यति वा पक्ष्यमाणः पक्ष्यते वा । व्यवस्थितविभाषेयम् । तेन इवादिभिर्योगे सम्बोधने लक्षणहेतोः क्रियायां वत्यत्र नित्यो विधिः। वातैकार्थत्वे विकल्पः । इतिशब्दयोगे तु न भवति ।

## LXXVIII.

[1]तच्छ्रुत्वा जामदग्न्यस्य रामो रामस्य भाषितम् ।
गौरवाद् यन्त्रितकथो [2]जामदग्न्यमथाब्रवीत् ॥ १ ॥
[3]श्रुतवानस्मि ते कर्म्म घोरं यत्तु त्वया कृतम् ।
न तेऽभ्यसूये तत् कर्म्म पितुरानृण्यकारिणः ॥ २ ॥
[4]वीर्यशक्तिपरिक्षीणं क्षत्रमुत्सादितं त्वया ।
मा च क्रूरेण तेन त्वं कर्म्मणा गर्वितो भव ॥ ३ ॥
आनयेदं धनुर्दिव्यं पश्य मे बलपौरुषम् ।
क्षत्रस्यापि महत्तेजः पश्याद्य भृगुनन्दन ॥ ४ ॥
[6]इत्युक्त्वा तद्धनुर्दिव्यं रामो जग्राह वीर्यवान् ।
रामस्य जामदग्न्यस्य हस्तादीषत्स्मयन्निव ॥ ५ ॥
शरञ्च हस्तादादाय ततो लघुपराक्रमः ।
सन्धाय सशरं [8]कृत्वा विचकर्ष महायशाः ॥ ६ ॥

---

1. "For this SL. B, LXXVI. 1. श्रुत्वा तु जामदग्न्यस्य वाक्यं दाशरथिस्तदा । गौरवाद्यन्त्रितकथः (a) पितृराममथाब्रवीत् ॥ (a) S. रामं राम अथाब्रवीत् । 2. G. LXXVII. 33. पितुर्वचनमब्रवीत्, but P. agrees with our text. 3. For this SL. B. 2. श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव । अनुरुध्यामहे ब्रह्मन् पितुरानृण्यमास्थितः ॥ 4 For this and the following SL. B. 3. वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव । अवजानासि मे तेजः पश्य मेऽद्य पराक्रमं ॥ 5. G. 35. नातिक्रूरेण &c., P. is worm eaten here. 6. For this, and the following 2 Slokas, B. 4. & 5. इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधे । शरं च (a) प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ आरोप्य स धनू रामः शरं सज्यं चकार ह । जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीदिदं ॥ (a) S. प्रतिसंगृह्य &c. 7. G. 37. कृतस्मितः ॥ 8. G. 38 चापं &c, P. is

विकृष्य बलवच्चापि तद्धनुः सशरं तदा ।
रामो दाशरथिर्वाक्य[1]मिदं राममुवाच तम् ॥ ७ ॥
ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृ[2]तेन च ।
[3]शक्तोऽपि ते न मोक्ष्येऽहमिमं प्राणहरं शरम् ॥ ८ ॥
[4]इमां तु ते गतिं दिव्यां निहन्मि तपसार्जिताम् ।
[5]अहो लोकान् सुपुण्यांस्ते हन्म्यद्य शरतेजसा ॥ ९ ॥
[5]नह्ययं वैष्णवो राम शक्यो दिव्यो महाशरः ।
मया मोघं समुत्स्रष्टुं [7]परदर्पविनाशनः ॥ १० ॥
[8]ततो वरायुधधरं रामं दशरथात्मजम् ।
द्रष्टुं ब्रह्मादयो देवाः समाजग्मुर्मनोजवाः ॥ ११ ॥
देवानुपस्थितांस्तत्र दृष्ट्वा दिव्येन चक्षुषा ।
बुद्धा च ध्यानयोगेन रामं [9]नारायणांशकम् ॥ १२ ॥

---

illegible here. 1. G. 39. मुवाच पथितं पुनः, but P. agrees with our text. 2. P. तव ॥ 3. For this line B. 6. तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरं ॥ G 40. शक्तोऽपि न ते &c., but P. शक्तोऽपि तेन &c. 4 For this SL. B 7. इमां वा त्वद्गतिं राम तपोबल (a) समर्जितान् । लोकानप्रतिमान् वापि हनिष्यामीति मे मतिः ॥ (a) V. & S. समर्जितां. 5 G. 41. लोकान् वाप्रतिमान् पुण्यान् हन्मि ते शरतेजसा ॥ P. is worm eaten here. 6. For this SL. B. 8. नह्ययं वैष्णवो दिव्यः शरः परपुरंजयः । मोघः पतति वीर्येण बलदर्पविनाशनः ॥ 7. G. 42. बलदर्प &c. 8. For this SL. B. 9 & 10 वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः । पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः गंधर्वाप्सरसश्चैव सिद्धचारणकिन्नराः । यक्षराक्षसना-गाश्च तद्द्रष्टुं महदद्भुतं ॥ 9 G. 44. नारायणांगजं ।

[1]रामाभिभूत[2]वीर्यश्च जामदग्न्यस्ततोऽब्रवीत् ।
कृताञ्जलिरिदं वाक्यं रामं दशरथात्मजम् ॥ १३ ॥
कश्यपाय[3]मया राम यदा दत्ता वसुन्धरा ।
विषये मे न वस्तव्यं[4]त्वयेति मम शासनात् ॥ १४ ॥
[5]सोऽहं ततः प्रभृत्यस्यां न वसामि क्षितौ क्वचित् ।
मिथ्याप्रतिज्ञः काकुत्स्थ [6]न स्यामिति परन्तप ॥१५॥
[7]ततो नार्हसि मे हन्तुं गतिं दिव्यां मनोजवाम् ।
लोकांस्तु जहि मे पुण्यान् शरेणानेन राघव ॥ १६ ॥
[8]अक्षयं मधुहन्तारं जानामि त्वां [9]जनार्दन ।
धनुषोऽस्य परामर्षात्[10]स्वस्ति तेऽस्तु प्रसीद मे ॥१७॥
[11]एते सुरगणा राम पश्यन्ति त्वां [12]सवासवाः ।

---

1 For this SL. B. 11.& 12. जड़ीकृते तदा लोके रामे वरधनुर्धरे। निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ तेजोभिर्गतवीर्यत्वाज्जामदग्न्यो जड़ीकृतः। रामं कमलपत्राक्षं मंदं मंदमुवाच ह ॥ 2. G. 45. वीर्योऽसौ &c. P. वीर्योऽपि &c. 3. G. 46 यदा राम मया &c. B. 13 मया दत्ता यदा पूर्वं &c. 4 G. 46. इति मे कश्यपोऽब्रवीत्, P is worm—eaten here. B. 13. इति मां काश्यपोऽब्रवीत् ॥
5. For this SL. B. 14. सोऽहं गुरुवचः कुर्वन् पृथिव्यां न वसे निशां। तदा प्रभृति काकुत्स्थ कृता मे काश्यपस्य ह ॥ 6. G. 47. मा भूवमिति निश्चितं।
7. For this SL. B. 15 & 16. तामिमां मद्गतिं वीर हंतुं नार्हसि राघव। मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमं ॥ लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया। जहि तान् शरमुख्येन मा भूत् कालस्य पर्य्ययः ॥ 8. B. 17. अक्षय्यं &c., but S. has अक्षयं &c. 9. G. 49. सनातनं. B. 17 सुरेश्वरं ॥ 10. G. 49. अस्तु स्वस्ति &c. B. 17. स्वस्ति तेस्तु परंतप ॥
11. B. 18. एते सुरगणाः सर्वे निरीक्षंते समागताः। त्वामप्रतिमकर्माणमप्रतिद्वंद्वमाहवे ॥ 12- G. 50. समागताः &c., P. is worm-eaten here.

वरायुधधरं वीरं साक्षाद्विष्णुमिवापरम् ॥ १८ ॥
न चेयं [1]मम काकुत्स्थ व्रीड़ा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९ ॥
[2]इत्युक्तः स शरं रामो मुमोच रघुनन्दनः ।
लोकेषु जामदग्न्यस्य रामस्यामिततेजसः ॥ २० ॥
[3]ततः प्रभृति रामोऽभूदलोकः शरतेजसा ।
मुक्ते तस्मिन् शरे देवाः प्राशंसन् राघवं तदा ॥२१॥
[4]आकाशस्थविमानेषु स्वेषु दिव्येष्ववस्थिताः ।
आसन् वितिमिराः सर्वा दिशश्च विदिशस्तथा ॥२२॥
रामोऽपि जामदग्न्यस्तं रामं दशरथात्मजम् ।
प्रदक्षिणमुपावृत्य जगामाथ स्वमाश्रमम् ॥ २३ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
परशुरामलोकवधः ।

---

1. B. 19 तव &c. but V. & S. have मम &c. After this SL. B. (20) reads the additional SL. शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत । शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमं ॥ 2. For this SL. B 21. तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् । रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमं ॥ 3. For this & the following two Slokas B. 22 24. स हतान् दृश्य रामेण स्व ल्लोकांस्तपसार्जितान् । जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमं ॥ ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा । सुराः सर्षिगणा रामं प्रशशंसुरुदायुधं ॥ रामं दाशरथिं रामो जामदग्न्यः (a) प्रपूजितः । ततः (b) प्रदक्षिणीकृत्य जगामात्मगतिं प्रभुः ॥ (a) V. & S. प्रशस्य ह । (b) V. & S. प्रदक्षिणं कृत्वा &c. 4 G. 54. आकाशगा &c. P. is worm-eaten here.

## LXXIX.

[1]जामदग्न्ये गते रामे रामो दाशरथिर्धनुः ।
लब्ध्वा संदर्शयामास पितुः स्वबलनिर्जितम् ॥ १ ॥
[2]तांश्चाभिवादयांचक्रे वशिष्ठ[3]प्रमुखानृषीन् ।
प्रोवाच पितरं चेदं रामागमनविह्वलम् ॥ २ ॥
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिनी ।
[4]अयोध्याधिपते सेना त्वया नाथेननाथिनी ॥ ३ ॥
[5]रामस्य तद्वचः श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य[6]मूर्द्ध्नि चाघ्राय राघवम् ॥४॥
[7]गतो राम इति श्रुत्वा प्राप्य हर्षमनुत्तमम् ।
योजयित्वा पुनः सैन्यं जगाम[8]स्वपुरं प्रति ॥ ५ ॥
[9]समुच्छ्रितध्वजवतीं तूर्यस्वनविनादिताम् ।
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ ६ ॥

---

1. For this SL. B. LXXVII, I. गते रामे प्रशांतात्मा रामो दाशरथिर्धनुः । वरुणायाप्रमेयाय ददौ हस्ते महायशाः ॥ 2. For this SL B. 2. अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् । पितरं (a) विकलं दृष्ट्वा प्रोवाच रघुनंदनः ॥ (a) V. & S. विह्वलं &c. 3. G. LXXVIII. 2 प्रभृतीनृषीन्, P. is illegible here. 4. B. 3. अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ G. 3. अयोध्याभिमुखी &c. 5. B. 4. रामस्य वचनं &c. G. 4. रामस्यैतद्वचः &c. 6. B. 4. मूर्द्ध्न्युपाघ्राय &c. 7. For this SL. B. 5-6. गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः । पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ चोदयामास तां सेनां जगामाशु ततः पुरीं ॥ 8. G. 5. स्वपुरीं &c., but P. has स्वपुरं &c. 9. For this SL. B. 6 7. पताकाध्वजिनीं रम्यां तूर्योद्घु-

[1]राजप्रवेशाभिमुखीं पौरैर्मङ्गलवादिभिः ।
संकीर्णां प्राविशद्राजा पुरीं स्वं च निवेशनम् ॥ ७ ॥
[2]महेन्द्रभवनप्रख्यं नानारत्नमहर्द्धिमत् ।
कौशल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥ ८ ॥
[3]वधूप्रतिग्रहं चक्रुस्तथान्या राजयोषितः ।
सीतां रामस्य पत्नीं तामूर्म्मिलां लक्ष्मणस्य च ॥९॥
[4]कुशध्वजसुते चैव [5]परिवार्य्यानुगृह्य च ।
[6]ततः प्रवेशयामासुर्नृपवेश्म स्वलंकृताः ॥ १० ॥
[7]मङ्गलालभनीयैश्च शोभिताः क्षौमवाससः ।
उपनिन्युश्च[8] ता नार्यो देवतायतनान्यपि ॥ ११ ॥

---

ष्ट बिनाद्दितां ॥ सित्त &c. &c. 1. For this & the following SL, B. 7-10. राजप्रवेशसुमुखैः पौरैर्मंगलपाणिभिः ॥ संपूर्णां प्राविशद्राजा जनौघैः समलंकृतां । पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ पुत्रैरनुगतः श्रीमान् श्रीमद्भिश्च महायशाः । प्रविवेश गृहं राजा हिमवत्सदृशं प्रियं ॥ ननंद स्वजनै राजा गृहे कामैः सुपूजितः । कौसल्या च &c. G. 7. राजप्रवेशाभिमुखैः &c. 2 This line is wanting in G., P. is illegible. 3. For this SL. B. 11. वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः । ततः सीतां महाभागामूर्मिलां च यशस्विनीं ॥ G. 8, Line. 2. agrees with Line. 1. of this SL. in B, for the second line G. 9. has ततः सीतां श्रीप्रतिमामूर्मिलां च यशस्विनीं । P is illegible here. 4. For this line B. 12. कुशध्वजसुते चोभे जगृहुर्नृपयोषितः । 5. G. 9. परिगृह्यानुगृह्य च. P. is illegible. 6. This line is wanting in B. 7. For this SL B. 12-13. मंगलालपनैर्होमैः शोभिताः क्षौमवाससः ॥ देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् । 8. G. 11. ता एता &c., P. तास्तत्र देवतायतनानि च ॥

[1]अभिवाद्याभिवाद्यांस्तांस्तत्र[2]पूज्यगुरूंस्तथा ।
[3]रमयाञ्चक्रिरे काले भर्तृप्रियवशानुगाः ॥ १२ ॥
[4]तासां भूयो विशेषेण मैथिली जनकात्मजा ।
रमयामास भर्त्तारं विष्णुं श्रीरिव रूपिणी ॥ १३ ॥
प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
प्रियभावः स तु तया स्वगुणैरभिवर्द्धितः ॥ १४ ॥
तथैव रामः सीतायाः [5]प्राणैः प्रियतरोऽभवत् ।
हृदयं ह्येव जानाति प्रीतियोगं परस्परम् ॥ १५ ॥
सीतया तु तया रामः प्रियया सह संगतः ।
प्रियोऽधिकतरं तस्या विजह्रामरोपमः ॥ १६ ॥

तया स राजर्षिसुतोऽनुरूपया
समेयिवानुत्तम[6]राजकन्यया ।
अतीव रामः शुशुभे स कान्तया
स्वयं श्रिया विष्णुरिवापराजितः ॥ १७ ॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
अयोध्याप्रवेशः ।

---

1. For this SL. B. 13-14. अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥ रेमिरे मुदिताः सर्वा (a) भर्तृभिर्मुदिता रहः । (a) V. has सहिता रहः । 2. G. 11. पूज्यान् &c. 3. G. 12. रेमिरे मुदितास्तत्र भर्तृप्रियहिते रताः । P. is worm-eaten here. 4. This and the following 4 Slokas are wanting in B. 5. G. 14. प्राणेभ्योऽपि प्रियोऽभवत् । 6. G. 16. रूप &c, P. is worm—eaten here.

## LXXX

[1]कस्यचित्त्वथकालस्य राजा दशरथः सुतम् ।
भरतं कैकयीपुत्रं[2]समाहूयेदमब्रवीत् ॥ १ ॥
अयं केकयराजस्य पुत्रो वसति पुत्रक ।
[3]त्वां नेतुमागतो [4]वीर युधाजिन्मातुलस्तव ॥ २ ॥
[5]तस्मान्मातामहं द्रष्टुमितोऽनेन सह त्वया ।
गन्तव्यं [6]पश्य पुत्र त्वं पुरं मातामहस्य तत् ॥ ३ ॥
श्रुत्वा दशरथस्यैतद् भरतः कैकयीसुतः ।
[7]गमनायोपचक्राम शत्रुघ्नसहितस्तदा ॥ ४ ॥
[8]दृष्ट्वैव भ्रातरं तं वै[9]कैकेयी चाभ्युपागतम् ।
भरतश्चाभ्यनुज्ञातं श्रुत्वा राजीवलोचनम् ॥ ५ ॥
अभवत्तत्र कैकेयी मुदा परमया युता ।
चिन्तयामास च तदा गमनं भरतस्य सा ॥ ६ ॥
ततोऽभ्यनुज्ञाप्य नृपं सुतं सुरसुतोपमम् ।
प्रेषयामास कैकेयी गृहान् पितृगृहं स्वकम् ॥ ७ ॥
अमात्यैर्बलमुख्यैश्च रथैश्च बहुभिर्युतम् ।

---

1. Before this SL of our text B. (LXXVII. 14-15) reads कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ शुश्रूषमाणाः पितरं वर्तयंति नरर्षभाः ॥ 2. B. 15. अब्रवीद्रघुनंदनः । 3. G. LXXIX. 2. नेतुं त्वाम् &c. 4. B. 17. वीरो &c. 5 This SL. is wanting in B. 6. G. 3. पुत्र पश्य &c. 7. B. 18 गमनायाभिचक्राम &c. 8. This & the following 20. Slokas are wanting in B. 9. G, 5. कैकेयेभ्योऽभ्युपागतं । P. is worm-eaten

# KĀRIKĀVALĪ AND MUKTĀVALĪ.



* श्री श्री गुरुदेवो विजयतेतराम् *

चूड़ामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥

चूड़ामणीकृतविधुः-अचूड़ामणिः चूड़ामणिवत् सम्पद्यमान इति चूड़ामणीकृतः (अभूततद्भावे च्वि), that which is turned into a चूड़ामणि not being a चूड़ामणि in itself; चूड़ामणीकृतो विधुर्येन सः, he by whom the moon is used as a jewel to ornament his head.

वलयीकृतवासुकिः—अवलयं वलयं सम्पद्यते इति वलयीकृतः, that which, not being a वलय, is used or treated as a वलय; वलयीकृतो वासुकिर्येन सः, he by whom वासुकि the king of serpents is used as a bracelet.

लीलाताण्डवपण्डितः—लीलया ताण्डवं, dancing with ease or grace; तत्र ( तस्मिन् ) पण्डितः, skillful in that.

भवः- lit. the source (of all beings), the God S'iva.

भव्याय भवतु—be for prosperity.

*May the God S'iva, by whom the moon has been used as a jewel to ornament his head, and Vāsuki the King of serpents as a bracelet, prosper my undertaking.*

Taking the words of the stanza in the order in which they stand, it may be objected that in it there is समाप्तपुनरात्तत्वं काव्यदोषः, which consists in going back to a substantive, whose आकांक्षा has been satisfied by the verb in the predicate, for the purpose of joining to it an adjective for which it has no natural आकांक्षा.

What is this आकांक्षा ? It is the expectation which the utterance of a word raises in the mind of the hearer for some other word or words, to make the sense

complete. The power in a word to raise this expectation is also called आकांक्षा. In Grammar, this power in the words, is known as व्यपेक्षा. It is by this power, that several words are united into one whole called a sentence. This आकांक्षा is real and necessary, where it is natural. A*कारक, for instance, naturally raises the आकांक्षा for a verb; a word indicating some relationship, for the correlative; a word or phrase indicating some phenomenon due to some cause or reason, for some word or words indicatng the how or the why; an adjective for a substantive; an adverb, for a verb; and so on. But a substantive never gives rise to an expectation for an adjective. Hence in a natural sentence the adjective always precedes the substantive. Thus in the sentence under consideration, the adjectives चुडामणीकृतविधुः and वलयीकृतवासुकिः occupy their natural and proper places; but लीलाताण्डवपण्डितः, which comes after the substantive which it is meant to qualify, and even after the verb which has already satisfied all आकांक्षा raised by the substantive, occupies a place entirely beyond the limit of natural आकांक्षा, and thus compels us to go back to the substantive, for raising an artificial आकांक्षा for it, by the question कथंभूतो भवः, in order to make room for the adjective, as an answer to this question.

The *एकदेशी proposes to avoid the दोष by taking

---

* A noun or pronoun in a particular case-ending, standing in relation to a verb, is called a कारक. The word literally means "a cause." The action indicated by a verb is an effect produced by many causes, each of which, according to the nature of its relation to the effect, is differently named as कर्ता, कर्म etc.

* This term in Philosophy means one who gives an imperfect answer to a question, taking into consideration only one side of it.

लाताण्डवपण्डितः as the substantive, and भवः, चूडामणी-नविधुः, and वलयीकृतवासुकिः as its adjuncts. But दिनकरी nies the existence of the दोष, and the necessity of xplaining it For, the adjectives चूडामणीकृतविधुः and लयीकृतवासुकिः naturally give rise to the questions मिति विधोश्चूडामणीकरणं, किमर्थं वा वासुकेर्वलयीकरणं, and hus to the आकांक्षा for the reason why, which is supplied y लीलाताण्डवपण्डितः ।

---

निजनिर्मितकारिकावली-
मतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु
राजीवदयावशंवदः ॥

The author invites the attention of his disciples to what he is going to do, by this stanza.

निजनिर्म्मितकारिकावलीम्—निजेन निर्म्मिता या कारिकावली ाम् The कारिकावली which was composed by myself.

अतिसंक्षिप्तचिरन्तनोक्तिभिः—अति संक्षेपो यासु ताः, those in which there is great brevity ( of words ); चिरन्तनानाम् क्तयः, the sayings or arguments of the ancients, such s कणाद etc.; अति संक्षिप्ताश्चिरन्तनोक्तयस्ताभिः, employing n an abbreviated form the sayings or arguments of the ncients, such as कणाद etc

विशदीकरवाणि—अविशदं विशदं करवाणि. I elucidate the Kārikāvalí which needs elucidation ).

कौतुकात्—with ease, as if in sport; ननु, indeed [goes with कौतुकात्], *i. e.* कौतुकादेव, without feeling any thing like the labour of a serious undertaking.

राजीवदयावशंवद—*राजीवे या दया, kindness to the begin-

---

* Some suppose that राजीव was the name of the author's grandson, for whose benefit he undertook to explain the Kārikāvalí.

ner, तया वशंवदः, being under the influence of that, *i. e.* out of kindness to the beginner

*It is just out of kindness to the beginner, and in mere sport, that I undertake to explain the Kārikāvalí composed by me ; in the elucidations I employ the arguments of the ancient sages, such as Kaṇáda etc., although in an abbreviated form.*

---

**सद्रव्या गुणगुम्फिता सुकृतिनां सत्कर्म्मणां ज्ञापिका**
**सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ॥**
**विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली।**
**विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम्।**

सद्रव्या—द्रव्यैः सहिता *i e.* प्रतिपादकतया द्रव्यैर्युक्ता, having Dravyas or substances for a subject for treatment.

गुणगुम्फिता—गुणैर्गुम्फिता *i e* प्रतिपादकतया गुणैर्युक्ता, having Guṇas or qualities for its subject matter.

सत्कर्म्मणां ज्ञापिका-सताम् *i. e* उत्क्षेपणादीनां कर्म्मणां ज्ञापिका, treating of the different kinds of Karma or activity, as throwing up &c.

सत्सामान्यविशेषनित्यमिलिता—*सत् *i. e.* जातिरूपं, सामान्यं

---

* सामान्य, a property common to many individuals, is of two kinds, जाति and उपाधि; as the author treats of the former kind of सामान्य alone, the term सत्सामान्य is employed to mean the only kind of सामान्य (*i e.* जातिरूपसामान्य existing (*i. e.* treated of) in this book Hence सत् is explained as जातिरूपं here. But this explanation of the word सत् is a far-fetched one, and as the author, in the text सामान्यं सविशेषकं &c, uses the term सामान्य as synonymous with जाति, and has no qualifying word there to indicate that he wishes it to be understood as distinct from the other kind of सामान्य (उपाधि) refered to here, a commentato

विशेषाः, नित्यः *i. e.* समवायः, तैर्मिलिता *i. e.* प्रतिपादकतया युक्ता, with generic or specific property, *i. e.* the property which constitutes a genus or a species, principles of ultimate difference, and indestructible relation, as its subject matter; or सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा, that in which there are, the generic or specific property, principles of ultimate difference, and the indestructible relation, as some of the subjects treated of. नित्यमिलितं is taken in this second explanation as नित्यसंबन्धः *i. e.* समवायः or indestructible relation.

अभावप्रकर्षोज्ज्वला–अभावस्य प्रकर्षः, *i. e.* प्रागभावादिभेदेन वैलक्षण्यं, तस्य उज्ज्वला *i. e.* प्रकाशिका, explaining अभाव or non-existence of all the different kinds, such as प्रागभाव or non-existence before coming into being &c.

एषा–*i. e.* बुद्धिस्था, as yet existing in my mind. (Observe that the word एषा "this," is always used to point out something near at hand, and as the Siddhānta Muktāvalī has not yet been composed, it can only refer to it as existing in the author's mind and as just going to be produced).

सिद्धान्तमुक्तावली–सिद्धान्ता एव मुक्तास्तासामावली, a string of pearls, the pearls of which are the conclusions or decisions of philosophical inquiries.

विश्वनाथकृतिना—by the author, Viśwanātha.

विष्णोर्वक्षसि विन्यस्ता–offered as an ornament to adorn the breast of the God Vishṇu.

---

cannot be justified to take सामान्य in this context in its general sense, and then particularise it with सत् taken in this far-fetched and therefore questionable sense of जातिरूपं Hence the latter explanation सन्ति &c., in which सामान्य is taken in the sense of जाति, (in which sense the author everywhere uses it.

सुकृतिनां—पण्डितानां, of the learned.

वितनुतां—lit. may it spread or increase.

सद्युक्ति–(an adjunct of सिद्धान्तमुक्तावली). सत्यः युक्तयो यस्यां, that in which there are arguments, *i. e.* that which is supported by reasoning. This word is intended to perform the function of a sentence by itself, meaning 'for, it is supported by reasoning," in answer to the question, " How can it give pleasure to the learned?"

*May Siddhānta Muktāvalī, having Dravya, Guna &c. for its subject matter, and offered to the God Vishṇu by its author, please the learned, for it is supported by reasoning.*

The resemblance of सिद्धान्तमुक्तावली to मुक्तावली (a string of pearls), implied by the author's offering it as an ornament to adorn the breast of Vishṇu, is further indicated by the adjectives सद्रव्या &c., which in the case of a string of pearls may be explained thus :—

सद्रव्या— साध्यतया द्रव्यवती *i. e* द्रव्यसाध्या, requiring money to purchase it with, valuable.

गुणगुम्फिता—गुणेन सूत्रेण गुम्फिता निर्म्मिता, put together or strung by means of a thread.

सुकृतिनां—पुण्यवतां, of the virtuous (to be read in this case with सत्कर्म्मणां )

सत्कर्म्मणां ज्ञापिका—सन्ति *i. e.* समीचीनानि (भगवद्भजनादिरूपाणि) कर्म्माणि (पूर्वजन्मकृतानि) तेषां ज्ञापिका, indicative of good deeds (done in a previous life, whose merits qualify the doer to possess such valuable things in this life).

सत्सामान्यविशेषनित्यामिलिता—सत्सामान्यं *i. e.* समीचीना जातिः, good kind; विशेषः *i. e.* महत्वानिर्मलत्वादि, excellence consisting in bigness, purity &c, ताभ्यां मिलिता—possessing these qualities.

अभावप्रकर्षोज्ज्वला–अभावे *i. e.* तेजोऽभावेऽन्धकारे प्रकर्षेण

उज्ज्वला *i. e.* प्रकाशिका, emitting a lustre bright enough to make things visible, where there is no light.

The object of this Sloka is four fold :—

1. to state the (a) विषय or subject treated, (b) प्रयोजन or necessity of writing the treatise, (c) सम्बन्ध, or the relation between the subject matter and the treatise, and (d) अधिकारी, or the person qualified to read it;

2. to remove any doubts as to the completeness of the treatise, that might arise from words like अति संक्षिप्त &c. in the preceding Śloka. This is done, by presenting at length the list of the subjects treated of, and by indicating the method of treatment, by the word सद्युक्ति :;

3. to make an offering of it to God in accordance with the sacred precept of Krishṇa:—

यत्करोषि यदश्नासि तज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

4. to give the name of the treatise and its author, for the sake of fame.

Observe with regard to No. 1., that the विषय's are stated by name; the प्रयोजन is to be inferred to be पदार्थतत्त्वावधारण, or finding out, the true nature of, or truth about पदार्थ's or categories, as a matter of course; the सम्बन्ध is implied to be प्रतिपाद्यप्रतिपादकभाव, the relation between things established or made definitely known, and the establisher or that which makes them definitely known, by the compounds सद्द्रव्या &c., which have to be explained as प्रतिपादकतया द्रव्यवती &c., and by the adjunct सद्युक्तिः. Thus the two ideas put together mean that there is in this book, युक्त्या प्रतिपादकता or the virtue of making things definitely known by means of reasoning, or in other words, there is विशेषतः प्रति

